आनन्दाश्रमसंस्कृतग्रन्थावलिः।



ग्रन्थाङ्कः ४०

# संध्याभाष्यसमुच्चयः।

अत्र

(१) खण्डराजदीक्षितविरचिता बह्वृचसंध्यामन्त्रार्थदीपिका प्रभाख्यव्याख्या-समेता, (२) बह्वृचसंध्यापद्धतिभाष्यम्, (३) मध्वमतानुयायिमध्वा-चार्यविरचितबह्वृचसंध्याभाष्यम् (संध्यामन्त्रवृत्तिः), (४) श्रीकृ-ष्णपण्डितविरचिततैत्तिरीयसंध्याभाष्यं सपरिशिष्टम्, (५) भट्टोजीदीक्षितविरचितं तैत्तिरीयसं-ध्याभाष्यम्, (६) सायणाचार्यकृततै-त्तिरीयसंध्यामन्त्रव्याख्या च, इत्येतानि संगृहीतानि।



एतत्पुस्तकं

वे० शा० रा० 'काशीनाथ शास्त्री आगाशे'

इत्येतैः संशोधितम्।



तच्च

बी. ए. इत्युपपदधारिणा

## विनायक गणेश आपटे

इत्यनेन

## पुण्यपत्तनस्थानन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा प्रकाशितम्।

शालिवाहनशकाब्दाः १८४१

खिस्ताब्दाः १९१९

द्वितीयेयमङ्कनावृत्तिः।





मूल्यं रूपकद्वयम् ( रु० २ )

॥ श्रीः ॥

# महामोहविद्रावणम् ।

श्रीमदुदासीनवरश्री६मुकुन्ददासशिष्येण,
श्री६राममिश्रशास्त्रिभ्योऽधिगतवेदवेदान्ता-
दिविविधविद्येन, सां० यो० वेदान्ताचार्य्येण,
श्रीमोहनलालसाधुना



प्रणीतम्

आधुनिकाऽवैदिकाष्टोत्तरशतमततमस्तिरस्करणसमुद्यत्सह-
स्रभानुभानुविभवानां श्री६राममिश्रशास्त्रिणां निदेशेन
मुद्रितम् ॥

# MAHA-MOH-VIDRAVAN.

BY

BABA MOHAN LAL VEDANTA-CHARYA.

काशी ।
भारतजीवन प्रेस

सन् १८८६ ई० ।

# भाषाभूमिका ॥

—***—

सनातन वैदिकमार्ग के पक्षपाती आर्यवंश प्रभव भारतवर्ष-निवासी चातुर्वर्ण्य संप्रदाय के प्रत्येक विज्ञपुरुष को विनय पूर्वक निवेदन किया जाता है कि कलि के प्रभाव से वेद और मन्वादि सत्यशास्त्र के प्रचार न रहने से जो इस देश में नये २ ब्रह्मसमाज आर्यसमाज इत्यादि मनःकल्पित कुपथ का प्रचार हुआ है इस से इस देश की सामाजिक और धर्मसंबन्धी दशा बहुत ही हीन हो गई है जिस के मन में आती है वही धर्म के नाम पर गाज़ीमरद हो जाता है और चार बात महम्मदी मज़हब की और दो २ थियासफ़ी किरस्तानी और इधर उधर की ले के एक अलग, प्राचीन धर्म के नाम की आड़ में नया मनमाना हो पथ निकाल लेता है और उसे ऋग्वेद की संहिता से निकला बता कर अपनी रोटी का "सत्य तो यह है कि धर्म की आड़ में मालपूआ कचौरी खाता है" प्रबन्ध कर लेता है, और इस देश के नवयुवक तो नई पोशाक नई घड़ी और नई चाल के जूते के बड़े ही शौकीन हैं इन्हें जब यह सुन पड़ा कि एक मज़हब ऐसा पैदा हुआ है कि जिस में समस्त ही गुनाह की मुआफ़ी है और जाति पांति की कोई रोक टोक नहीं है तो एक दफे इन्हें उस मज़हब के शरीक होना अत्यावश्यक हो जाता है और ऐसी बात करने से जब उन्हें इस देश के ब्राह्मण पण्डित और घर के लोग रोकते हैं तो वे नव्य बालक नये खून के जोश में आय कर देश के हिताचरण के स्थान में अत्यन्त अहित करने लगते हैं, यह बात प्रसिद्ध ही है जैसे कि आर्यसमाजी इत्यादि

अवैदिक लोग करते हैं। इस महान् अनर्थ के निवृत्यर्थ एक समय हम लोगों की प्रार्थना से अज्ञानतिमिरनाशनैकसत्यभास्कर श्री ६ राममिश्र शास्त्री जी महाराज ने त्रैवर्णिकसर्वस्व नामक एक संदर्भ रचा था जो कि इस कलिकाल में अत्यन्त दुःसंभव तर्कमात्रमात्र्य कार्य है परन्तु वह ग्रन्थ साधारण लोगों की बुद्धि के बाहर है यह जान के शास्त्री जी की आज्ञानुसार उस का संक्षेप महामोह विद्रावण नाम से यह ग्रन्थ किया गया है और अयत्न ही वैषयिक लोग जो कि संस्कृत नहीं जान सकते उन के अर्थ पं० विजयानन्द जी ने इसका परमोत्तम अनुवाद भी किया है॥

हमें अब अधिक न कह कर यही कहना है कि जिस प्रकार यह अपूर्व ग्रन्थ मुद्रित हो जाय वह उपाय आप लोग करें, और यह ग्रन्थ नहीं है यह तो कुमत और कुपथ के निवारण का एक महामन्त्र, है इसे गृहस्थ लोग अपने २ इष्टदेव के घर मे पुस्तकाकार मे रक्षापूर्वक स्थापन करें ताकि घर मे नास्तिक्य रूप महा विष का प्रचार न होय॥

आप का कृपाभिलाषी
मोहनलाल साधु—भवपुरी निवासी।

—●●●—

ओम्ब्रह्मणे नमः ।

श्रीकाशीत्रिशेखरो विजयते ।

# भूमिका ।

अथैकदा पवित्रतमायां सुलभसुभगगाङ्गप्रवाहायां वाराणस्यां विज्ञैरज्ञैः सर्वैरपि धर्म्मध्वजिशिरोमणिः पुण्यजनप्रवर इति सममधिगतः पङ्कबहुलाल्पजलात्पल्वलात्सद्यः समुत्थितः सर्वाङ्गीणपङ्कलेपेन स्वच्छरोमेव स्थूलकायो धर्म्मसुस्तकमूलमुल्लुनानः काश्यादिपुण्यतीर्थभुवो दारयन्निव कश्चिद्भिक्षुवेषो देवनिन्दाघोरशब्दघुरघुरायितमुखः कलङ्कयन्निव स्ववेषं प्लावयन्निवाऽज्ञानाम्भसि जगदशेषं सञ्जनयन्निव सताञ्चेतसः क्लेशं वञ्चयन्निव स्वदेशं वस्तुतः स्वात्मानमेव वञ्चयन् कलुषयँश्च समुपागमत् ॥

अथैतस्यधार्ष्ट्यम् ।

यदयं सविकत्थमकथयत्, काशिकैर्विद्वद्भिर्वादाह्वयशोऽनुभवितुमिच्छामीति । तदिदं दैवान्महामान्यस्य वदान्यस्याऽस्मदीयसर्वस्वस्य भारतराजकुलरत्नस्य काशिकाप्रभोः श्रीमदीश्वरीप्रसादनारायणवीरपुङ्गवस्याऽवधीरितकर्णकीर्तेः कर्णयोरातिथ्यमुपागमत्, अयञ्च विदुषतीमिनां मदीयवाराणसीमध्यासीनो विद्वद्भिर्वादाहवं प्रार्थयिषुर्यदि कोपि नास्तिको वा ऽऽस्तिको वा पण्डितः पण्डितम्मन्यो वा स्वाभ्यर्थितार्थविमुखो वदान्यान्तरं याचेत तदा स्यान्मे यशोराशिनाश इत्याकलयन् सहसैव प्रार्थितार्थमपूरयत्, आजुहाव च विदुषस्तेपि कौतुकिनो ऽकुतोभयाः सर्वतन्त्रकौतस्कुतनिवर्त्तका अभयप्रदानाय लोकानाम्प्रसेदुरुत्तरवितरणायोदरम्भरेर्मुण्डिनः प्रश्नानाम् ॥ अथ षड्विंशत्युत्तरैकोनविंशतिशततमे वैक्रमाब्दे कार्त्तिके मङ्गलशुक्लत्रयोदश्यां लब्धपदोऽयं वादाभासो घटिकाद्वयादूर्द्ध्वं जायमानो वादिमौनभावाव-

सानोपि बालेनेव विदुषा मशकेनेव मत्तदन्तिनामशस्त्रेणेव शस्त्रिणामनभिज्ञेनाऽभिज्ञानां नीतिनिपुणस्य पुण्यतमप्रकृतेर्महाराजस्य राजजनस्यापि च नातीव मनोमुदमजीजनत् ।

अथ विद्वत्प्रतापानलखिद्यदखिलगात्रे ऽनधीतशास्त्रे ऽवशिष्ट साहसमात्रे सताङ्कर्षणपात्रे वेदद्रुमच्छेदामृदुदात्रे निर्वचनभावमुपेयुषि क्षुद्रे वादिनि मुण्डिनि सर्वशास्त्रवैदेशिकं तमुपेक्षमाणेष्विव विद्वत्सु सन्ध्यानुष्ठानसमयं समवगमयती वा ऽस्तमयति भगवति भास्वति प्रार्थितार्थसार्थचिन्तामणिर्नृपमणिर्ज्जनक इव कर्म्मानुष्ठानपरायणः सभास्थौरजनतालशब्दवहुलं विससर्ज्ज ॥

अथ वालिकक्षनिर्गतस्य दलितस्य मर्द्दितस्यापि रावणस्य वहिर्निर्गत्य विजयोद्घोषवत् मुण्डिन्यपि देशाद्देशान्तरं विचरति स्वीयं विजयं ख्यापयति भारतवर्षे स्वसदृशांश्चलमतीनलभमाने अमेरिकादिदूरदेश निवासिभिः सह लब्धसाम्पदीने तैः सहैवपुनरेकदा काश्यांकच्चिदाराममध्यासीने मुण्डिनि जगति ख्यातयशसं ( कर्न्नल आल्कट ) नामानं द्रष्टुमिच्छू राजाशिवप्रसादश्चतुरशिरोरत्नायितस्तस्मिन्नेवारामे मुण्डिना सङ्गतो ग्रामं गच्छँस्तृणं स्पृशतीति न्यायेन वेदब्राह्मणशब्दार्थ प्रश्नव्याजेन तदीयां मतिम्मतञ्च परीक्षाञ्चक्रे । अयञ्च चिराभ्यस्तोत्तरशैलीं स्वीकुर्वाण आरेभे प्रतारयितुम् । राजा शिवप्रसादोपि स्वीयां प्रवचनप्रपञ्चचातुरीमूरीकुर्वाणः कटाक्षयन्निवावोचत् । मादृशानाम्मन्दमतीनामववोधो लेखादृते न साध्य इति मुण्ड्यऽपि लेखं स्वीचकार ॥

अथ कतिपयानि नाम्नोत्तरपत्राणि स्वरूपतस्तु कपटकौटिल्यनिन्दामात्सर्याभिमानभूमभवनान्यवाप्य विनयपुरस्सरं नाम्नापि निवेदनं नामाऽमुद्रयन्नयं राजा शिवप्रसादः । प्रैषयच्चैतत् नाम्नाऽऽर्य्यसामाजिकानां मुण्डिनश्च निकटे, अयं मुण्डी च लोकचतुरः स्यान्मे क्षतिर्वृत्तेरकुटिलपथवर्तिषु मत्सामाजिकेषु, इति परिचिन्त्य सहसैव भ्रमोच्छेदनं वस्तुतो भ्रमोत्पादनं नाम पुस्तकममुद्रयत् । यत्र काश्यां लौ–

क्षिका धनिकास्तथा प्रतिवक्तुं क्षमन्ते तत्र का नाम कथा विदुषामिति सुदूरमवधार्य्य नाहमितः परं केनचित्काशीस्थविदुषा विचारे प्रवर्त्तिष्ये इति समपथं लिलेख, युक्तमाचचारचैतद् ऽन्यथा कस्मिंश्चिद्विदुषि रोषमुपागते का नाम शरणप्रत्याशा, भवतु किमप्येतत् प्रतारयत्वेषपाश्चनदाननभिज्ञान् यवनविद्यामात्राभ्यासिनः कायस्थानपरान्वा तथाविधान्, परमस्य वेदप्रतारणं खेदयत्यस्मदीयंचेत इत्येतस्य कतिपयप्रधानविडम्बना निराकरणायायमुद्यमो ऽस्मदीयो माभून्नाम गर्हणाविषयः, यदहंकाशीनिवास्यपि क्षुद्रे वादिनि सन्दधानोपि लोकानां महामोहनिराकरणायैव प्रवृत्तो नतु वादिनि तुच्छे महिमानं तदीयप्रतारणासु वा गरिमाणमालक्ष्य, नहि पञ्चास्यो मशके महिषे शशके वा ऽवगत्य वलतारतम्यम्प्रवर्त्तते । परन्तु तस्य सा निजा वृत्तिर्यदसावनवगतविपक्षबलतारतम्य एव न सं सहते विपक्षमात्रम्, धर्म्मलोपभीरूणां सतां चैष सहजो निसर्गो यदिमेऽनभिलक्षितवादिगरिमाणोपि लोके कुपथमनुसरति सहसा तन्निवृत्तिमुशन्तीति, स्फुटमिह निदर्शनं काशीस्थविदुषां विधवोद्वाहशङ्कासमाधिः, यदि नामैकमात्रं दुराचारं प्रवर्तयितुमिच्छन् क्षन्तव्योभून्मुम्बापत्तनस्थो विष्णुशास्त्री, तदाह्निकमारभ्य ज्ञानतत्साधनोपायपर्य्यन्तन्दूषयन्कथमुपेक्षणीयः स्यादित्यस्थाने वादानर्हे ऽतएव विदुषामुपेक्षार्हेप्यपेक्षाबुद्धिमान्क्षन्तव्यागाः स्यामित्यभ्यर्थये काशीस्थप्रेक्षावतो भगवन्तश्चाज्ञानां बुद्धिशोधनद्वाराऽमुष्य व्यापारस्य साफल्यविधाविति कश्चित् ॥

संवत् १९४०
आषाढ़ कृष्ण १ गुरौ

वेदान्ताचार्यः
श्रीमोहनलालनामा

# महामोहविद्रावणम्।

॥ श्रीः ॥

सटापटलपाटिताम्बुदकदम्बविम्बस्खलत्-
तडिद्वततिसंस्फुरत्किरणचक्रवालाञ्चितः * ।
निजव्यसनजत्वराभरगृहीतचित्राऽऽ (१) कृति-
र्हिरण्यगजगञ्जको हरि (२) रिहास्तु मोदाय वः ॥ १ ॥

यदा यदा ग्लानिमुपैति धर्मः पाखण्डचण्डः प्रसरत्यधर्मः ।
तदा तदा दुष्टगणान्निहन्तुं शिष्टव्रजं चाऽवतरामि पातुम् ॥ २ ॥

य एवमाहस्म दशावतारः संसारवारांनिधिपारतारः ।
सद्धर्मशर्मावननद्धदीक्षो दैत्यारिरत्याहितमुच्छिनत्तु ॥ ३ ॥

निरस्तपुन्दोषविशेषशङ्कातङ्काविकल्याख्यकलङ्कभिन्नाः ।
उप (३) ध्युपाध्याधिविशून्यधर्मब्रह्मावबोधा निगमा जयन्ति ॥ ४ ॥

† ऋग्वेदादिप्रतारणभूमिकायाः ८० पृष्ठे ।

अथ कोयं वेदोनाम मन्त्रभाग (१) संहितेत्याह किञ्च मन्त्रब्राह्म-

---

* तथाभूतकिरणमण्डलेन पूजितः नीराजनयेव राजित इति गर्भः।

(१) निजस्य भगवच्चरणशरणीकरणैकतानस्य प्रह्लादस्य व्यसनं हिरण्यकशिपुकृततर्जनभर्त्सनताडनादिलक्षणं तेनजातो यस्त्वराभरस्सम्भ्रमातिरेकस्तेन गृहीता चित्राकृतिर्नरसिंहसंहननं येन स तथा भक्तनिग्रहमभिवीक्ष्य तत्प्रतीकाराय सन्नहने संभ्रमातिशयेनाऽवधानोच्चाटनादिव तथा विग्रहग्राहीतिभावः ।

(२) हरिर्भगवान्नारायणः, अथच हिरण्यकशिपुरूपगजस्य विध्वंसनेसिंह इति श्लिष्टम् ।

(३) उपधिः—कपटः ।

† इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यतीति प्राचामभिधानान्मानसकुभावेन नाम्नर्ग्वेदभाष्यभूमिकामारचयन् प्रतारणामिव करोतीति ऋग्वेदादिप्रतारणभूमिकामभिदध्महे ।

(१) एषा पदाऽशुद्धिः कुपूयचरणस्य ।

णयोर्वेदनामधेयमिति कात्यायनोक्तेर्ब्राह्मणभागस्यापि वेदसञ्ज्ञा कुतो न स्वीक्रियते इति मैवं वाच्यम् न ब्राह्मणानां वेदसञ्ज्ञा भवितुमर्हति कुतः पुराणेतिहाससञ्ज्ञकत्वात् वेदव्याख्यानादृषिभिरुक्तत्वादनीश्वरोक्तत्वात्कात्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामस्वीकृतत्वान्मनुष्यबुद्धिरचितत्वाच्च ।

इति कश्चित् कपटभिक्षुः स्वीयर्ग्वेदादिप्रलापे प्रललाप, तदत्यन्तं स्ववीयः, ब्राह्मणानां वेदसञ्ज्ञकत्वाभावे हेतुत्वेनोपन्यस्तस्य पुराणेतिहाससञ्ज्ञकत्वस्य ब्राह्मणानां वेदसञ्ज्ञकत्वाभावे ऽहेतुत्वात्, नह्येकस्य वस्तुनो नानानामधेयकत्वमदृष्टचरम् । एकैव हि कम्बुग्रीवादिमती व्यक्तिर्घटः कलसो द्रव्यमित्येवं व्यवह्रियत इत्यस्ति प्रामाणिकानामनुभव इतीतिहासादिसञ्ज्ञकत्वेन वेदसञ्ज्ञकत्वाभावसाधनमाम्रामोदकायितम् । यदि च पुराणेतिहाससञ्ज्ञकत्वस्य वेदसञ्ज्ञकत्वस्य च पारस्परिकविरोधमुत्प्रेक्ष्य ब्राह्मणानां वेदसञ्ज्ञकत्वाभावे पुराणेतिहाससञ्ज्ञकत्वं हेतूकरोषि, तदा व्याचक्ष्व, क्वानयोः सञ्ज्ञयोर्विरोधो निरीक्षितो भवता ? यदि चेतिहाससञ्ज्ञकेषु भारतादिषु पुराणसञ्ज्ञकेषु पाद्मादिषु च वेदव्यवहारविरहात्पुराणेतिहाससञ्ज्ञकत्वम्भवति वेदसञ्ज्ञकत्वविरोधीति ब्रूषे, तर्हि पाद्मभारतादीनाम्पुराणेतिहाससञ्ज्ञकत्वममन्वानो भवान् कथमिदमुद्भावयितुं पारयेत् । अथाचक्षीत पुराणेतिहाससञ्ज्ञकानामैतरेयादिब्राह्मणानां न वेदसञ्ज्ञकत्वमिति तत्रैवोपलब्धो विरोध इति, तदप्यपेशलम् । ब्राह्मणानां वेदसञ्ज्ञकत्वाभावं सिषाधयिषुर्भवान्कथमिव तेषामसिद्धम्पुराणेतिहाससञ्ज्ञकत्वं हेतुत्वेनोपन्यस्येत् यदि च पुरातनार्थप्रतिपादकत्वादैतिहासिकार्थप्रतिपादकत्वाच्च सिद्धमेव ब्राह्मणानां पुराणेतिहाससञ्ज्ञकत्वमित्येवं ब्रूयात् तदैतादृशपुराणेतिहाससञ्ज्ञकत्वं न वेदसञ्ज्ञकत्वासमानाधिकरणमिति नैतस्य ब्राह्मणानां वेदसञ्ज्ञाविरहसाधकत्वसम्भवः, तत्र तस्यौदासीन्यात् नहि पुरातनार्थप्रतिपादकत्वमात्रं वेदसञ्ज्ञामपाकर्तुमर्हति

वेदानां त्रैकालिकार्थप्रतिपादकत्वस्य * सर्वास्तिकतन्त्रसिद्धत्वात्। किञ्च त्रैकालिकमर्थमभिदधतो वेदाः पुरातनार्थमपि प्रतिपादयन्तीति तेष निरुक्तयौगिकपुराणेतिहासत्वसत्त्वेन निरुक्तोयं हेतुर्वेदानामपि अवेदत्वं साधयेत् तस्मादयं पुराणेतिहाससञ्ज्ञकत्वादिति हेत्वाभासः। किञ्च ब्राह्मणव्यतिरिक्तपुराणेतिहासग्रन्थसद्भावं वात्स्यायनो महर्षिर्गोतमीयेषु सूत्रेषु भाष्यमाभाषमाणोऽभ्युपागमत् तथाहि चतुर्थेऽध्याये प्रथमे आह्निके द्वाषष्टितमे "समारोपणादात्मन्यप्रतिषेधः" इति सूत्रे "प्राजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वा ऽऽत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते तेन विजानीमः प्रजावित्तलोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्तीति एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्ते इति नाविशेषेण कर्तुः प्रयोजकफलं भवतीति चातुराश्रम्यविधानाच्चेतिहासपुराणधर्म्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः तदप्रमाणमिति चेन्न प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणस्य प्रामाण्यमभ्यवदन् इतिहासपुराणं पञ्चमं वेदानां वेद इति तस्मादयुक्तमेतदप्रामाण्यमिति, अप्रामाण्ये च धर्म्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्म्मशास्त्रस्य चेति विषयव्यवस्थानाच्च यथा विषयं प्रामाण्यम्। अन्यो मन्त्रब्राह्मणस्य विषयो ऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य लोकवृत्तमितिहासपुराणस्य लोकव्यवहारव्यवस्थापनं धर्म्मशास्त्रस्य विषयः तत्रैकेन न सर्वं व्यवस्थाप्यत इति यथाविषयमेतानि प्रमाणानि

* हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ १ ऋ० अ० ८ अ० ७ व० ३ मं० १। इत्यादि संहितामन्त्रेषु पुरातनार्थप्रतिपत्तिः स्फुटमेव भवति॥

इन्द्रियादिवदिति" इत्यभिदधे वात्स्यायनः । स्पष्टमिदमेतेन यद्ब्राह्मण भागव्यतिरिक्तः कश्चित् पुराणेतिहाससञ्ज्ञको लोकवृत्तरूपासाधारण-विषयप्रतिपादको वाक्यकलापो यज्ञरूपप्रतिनियतासाधारणविषयप्र-तिपादकान्मन्त्रब्राह्मणभागात्पृथगवस्थितो यस्य प्रामाण्यबीजम्मन्त्र ब्राह्मणद्रष्टृप्रवक्तृद्रष्टृप्रवक्तृकत्व * रूपं साधारणमिति । यदि ब्राह्मणाना मितिहासपुराणपदार्थतामृषिरन्वमंस्यत तदा कथमिव पुराणानां प्रामाण्यं व्यवतिष्ठापयिषुर्म्महर्षिस्तदप्रमाणमित्याशङ्कमानः " पुराणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते" इति पूर्वोक्तं विपुलं व्यधास्यत प्रायसिष्यच्च। ब्राह्मणानां पुराणपदार्थत्वे तथाभिधा-नमसङ्गतं स्यान्नहि स्वमेव स्वप्रामाण्यसाधकमिति कश्चिदप्यऽनुन्मत्त उत्प्रेक्षेतापि तस्मा "द्ब्राह्मणानि न वेदाः पुराणेतिहाससञ्ज्ञकत्वा" दित्यनादिपापवासनादूषिताऽशेषशेमुषीकस्य प्रतारकस्याभिधानम्पू-तिकूष्माण्डायितम् । १ ।

वेदव्याख्याना(१)दित्यपरो महाप्रलापो भिक्षोः।

अत्र ब्राह्मणानि न वेदाः वेदव्याख्यानरूपत्वादिति न्यायाकारः अयञ्च हेतुरनैकान्तिकः वेदव्याख्यानं नाम वेदपदव्यपदेश्यवाक्यकलापस्य पदान्तरेणार्थकथनम् तच्चेदं " प्रजापतेनत्वदेतान्यन्यो विश्वारूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वय ँ स्याम पतयो रयीणा" मिति याजुषो मन्त्रः अ० २३ मं० ६५ ॥

"प्रजापते नत्वदेतान्यन्यो विश्वाजातानि परिताबभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वय ँ स्याम पतयो रयीणा" मित्यृचः ।

"नवो नवो भवसि जायमानोन्हाङ्केतुरुषसामेष्यग्रम् । भागं देवेभ्यो विदधास्यायन्प्रचन्द्रमास्तिरते दीर्घमायु" रित्याथर्वणः ।

"नवो नवो भवति जायमानोऽन्हाङ्केतुरुषसामेत्यग्रम् । भागन्दे-

* मन्त्रब्राह्मणानां द्रष्टृप्रवक्तारो द्रष्टृप्रवक्तारो यस्येति बहुव्रीहिः ।

(१) वेदव्याख्यानादित्यप्यशुद्धं व्याकरणरीत्येति सूक्ष्ममीक्ष्यताम् ।

वेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायु" रित्यृचः ।

एष्वाद्ययोर्म्मन्त्रयोर्विश्वा रूपाणीति पदघटितादाद्यमन्त्राद्विश्वा जातानीति पदघटितस्य द्वितीयमन्त्रस्य, चरमयोश्च भवसि जायमान इति उषसामेष्यग्रमिति विदधास्यायन्निति च विलक्षणपदघटितादाद्यमन्त्राच्चतुर्थस्य मन्त्रस्य, भवति जायमान इति उषसामेत्यग्रमिति विदधात्यायमिति च विलक्षणपदघटितत्वेन भिन्नतया वेदपदानां पदान्तरेणार्थकथनरूपस्य वेदव्याख्यानत्वस्य दुरपन्हवतया तदन्तर्भाविणैवानैकान्तिकम् । अत्र च "वेदव्याख्यानरूपत्वात्" इतिहेतुस्सो[१] पाधिकोपि तथाहि । यत्र यत्र वेदत्वाभावो महाभारतादौ तत्र तत्र स्मर्य्यमाणकर्तृकत्वमिति साध्यव्यापकत्वम् । वेदव्याख्यानरूपत्वन्तु पूर्व्वोक्तेष्वमीषु मन्त्रेष्वपि तत्र च न स्मर्य्यमाणकर्तृकत्वमिति साधनाव्यापकत्वम् । तस्मात्स्मर्य्यमाणकर्तृकत्वं भवत्युपाधिः । नचास्तूपाधिरिति शङ्क्यम् । स्मर्य्यमाणकर्तृकत्वरूपोपाध्यभावेन पक्षत्वेनाभिमतेषु ब्राह्मणेषु वेदत्वरूपसाध्याभावस्यानुमानेन "ब्राह्मणानि न वेदा" इत्यनुमितेः प्रतिरोधात् । इत्युपरम्यते न्यायप्रयोगानभिज्ञस्य पदवाक्यपरिपाट्यनभिज्ञस्याऽधिकखण्डनात् ।

"ऋषिभिरुक्तत्वादिति" कपटभिक्षोस्तृतीयो महामोहः । अत्रब्राह्मणानि न वेदा ऋषिभिरुक्तत्वादिति न्यायाकारः । अत्रायमसाधको हेतुः ऋष्युक्तत्वस्य ऋगादिसाधारणत्वात् । ऋचोप्यपाठिषुरेवर्षयः नतावता तासां वेदत्वव्याहतिः । यदि च ऋष्युक्तत्वपदेन ऋषिप्रणीतत्वमभिप्रैषि तदा ब्राह्मणान्यपि न ऋषिप्रणीतानीति "ऋषिप्रणीतत्वात्" इति स्वरूपासिद्धोहेतुः यदि च भारद्वाजाङ्गिरोवसिष्ठपुलहयाज्ञवल्क्यजनकादिसंवाददर्शनादृषिप्रणीतत्वभ्रान्तिस्ते ब्राह्मणग्रन्थेषु, तदाऽनवगतवेदवर्त्माऽनभिलक्षितवेदसम्प्रदायो ऽकृतगुरुकुलवासो ऽनासादितब्रह्मसम्पत्तिर्भवानित्येवास्माकं निश्चयः, यतो वेदानामिदमेव हि वेदत्वं

[१] प्रकारान्तरेण व्यभिचारित्व प्रदर्शनम् ।

यद् इमे ऽतीताऽनागतवर्तमानसन्निकृष्टविप्रकृष्टसर्ववस्तुसाधारख्येन सर्वं विदन्ति वेदयन्ति च सर्वपुरुषान्, अत एव "लौकिकानामर्थपूर्वकत्वा" दित्याहस्म कात्यायनः प्रातिशाख्ये, लौकिकानां "गामभ्याज शुक्लां दण्डेने"त्यादिवाक्यानां प्रयोगो ऽर्थपूर्वकः. प्रयोक्तारोहि तत्तत्प्रतिपिपादयिषितमर्थमुपलभमाना अनुसन्दधतो वा प्रयुञ्जते लौकिकानि वाक्यानि, वैदिकानां नित्यानां वाक्यानां नार्थपूर्वकः प्रयोगो घटते वैदिकवाक्यार्थानां सृष्टिप्रलयादीनामनित्यत्वात्। ततश्च वस्तुसद्भावनैरपेक्ष्येण लोकवृत्तमवगमयन्तो वेदा यदि याज्ञवल्क्यजनकादिसंवादमभिदध्युस्ततस्ते का क्षतिः। इतरथा तु "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यादिसंहिताभागस्याप्यवेदत्वापत्तिः। यथाहि जनकादिसंवादस्य ब्राह्मणेषु दर्शनाज्जनकादिकालानन्तरकालवृत्त्युत्पत्तिमत्त्वं ब्राह्मणेषूत्प्रेक्षसे तथा सूर्य्याचन्द्रमसाविति श्रुतेरपि सूर्य्याचन्द्रमसोस्सृष्ट्यभिधायकत्वेन तदुत्पत्तिकालानन्तरकालोत्पत्तिकत्वेनाऽनित्यत्वं स्यादिति वृद्धिमिच्छतस्ते मूलहानिरिति महदनिष्टमेतत्प्रसज्येत। तस्मात् सूर्य्याचन्द्रमसोस्सृष्ट्यभिधायकोपि वेदो न तदुत्पत्तिकालानन्तरकालोत्पत्तिको वेदवाक्यानामर्थपूर्वकत्वविरहादित्यनायत्याऽभिदधानो भवान्कस्मादकस्मादेव ब्राह्मणेषु सन्नह्यति ततश्च भारद्वाजाङ्गिरोनामदर्शनमात्रं नावेदत्वसाधकमिति शम्।

"अनीश्वरोक्तत्वात्" इति चतुर्थी महामूर्च्छा ॥

अत्रानीश्वरोक्तत्वमीश्वरभिन्नोक्तत्वम् तच्च ऋष्युक्तत्वसाधारणमिति पूर्वोक्तहेतोरनतिशयात्पुनरुक्तत्वरूपनिग्रहस्थानापन्नोभवान् इत्युपरम्यतेऽस्माभिः शम् ॥

"कात्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामस्वीकृतत्वात्" इति तु देवानाम्प्रियस्य साहसोक्तिः "मन्त्रब्राह्मणयोर्वेदनामधेय"मित्यापस्तम्बेनयज्ञपरिभाषासूत्रेषु ब्राह्मणानां वेदत्वस्य सुस्पष्टमुक्तत्वात्। किञ्च सर्ववैदिकाविरोधार्थं पूर्वमीमांसादर्शने द्वितीये ऽध्याये प्रथमपादे द्वात्रिंशत्तमे

सूत्रे मन्त्रं लिलक्षयिषुराचार्य्यः प्राहस्म "तच्चोदकेषु मन्त्राख्या" "शेषे ब्राह्मणशब्दः" इति च, अत्र हि "शेषे ब्राह्मणशब्दः" इति द्वितीयसूत्रोक्तया शेषे मन्त्रभागादवशिष्टे मन्त्रैकदेशे ब्राह्मणशब्द इत्यर्थाद् वेदस्य मन्त्रब्राह्मणात्मकप्रभेदद्वयवत्त्वसिद्धिः । यद्याचार्य्यो वेदैकभागत्वन्नावागमिष्यत्कथमसौ व्यवास्यत "शेषे ब्राह्मणशब्दः" इति, नहि महाभारतस्य रामायणं शेष इत्यनुन्मत्त आचक्षीत तदवश्यं शेषशब्दमहिम्ना ऽऽचार्य्यस्य ब्राह्मणे वेदभागत्वमभिमतमित्यवगम्यते । अत एव ब्राह्मणनिर्वचनाऽधिकरणे "अथ किंलक्षणं ब्राह्मणम् मन्त्राश्च ब्राह्मणञ्च वेदः तत्र मन्त्रलक्षण उक्ते परिशेषसिद्धत्वाद्ब्राह्मणलक्षणमवचनीयम् । मन्त्रलक्षणवचनेनैव सिद्धं यस्यैतल्लक्षणं न सम्भवति तद्ब्राह्मणम् इति परिशेषसिद्धं ब्राह्मणम्" इतिव्याचख्युराचार्य्याः शबरस्वामिनः । अत एव च भगवान् जैमिनिर्निरुक्तसूत्रद्वयेन मन्त्रब्राह्मणात्मकं कृत्स्नं वेदंल्लक्षयित्वा तदेकदेशभूता ऋचः "तेषामृग्यत्रार्थवशेन पादव्यवस्था" इति सूत्रेण पञ्चत्रिंशत्तमेन ऋचः "गीतिषु सामाख्या" इति षट्त्रिंशत्तमेन सामानि "शेषे यजुःशब्दः" इति सप्तत्रिंशत्तमेन यजूंषि लक्षयामास । ततश्च यजुषोप्येकदेश "निगदोवा चतुर्थं स्याद्धर्मविशेषात्" इत्यष्टत्रिंशत्तमेन यजुर्विशेषं निगदमलक्षयत् यद्ययमाचार्य्यो ब्राह्मणानां वेदपदार्थतां नाभिमन्येत ततः "तच्चोदकेषु मन्त्राख्या" इत्येतन्मन्त्रलक्षणानन्तरमेव ऋगादींल्लक्षयेत् । लक्षयति चायम्मन्त्रानन्तरं "शेषे ब्राह्मणशब्दः" इति ब्राह्मणमेव ततोऽस्यावश्यमेव ब्राह्मणानां वेदपदार्थत्वमभिमतमिति प्रेक्षावता जैमिनेरभिप्रायो वक्तव्यः । न केवलम्महर्षिणा जैमिनिनैव ब्राह्मणानां वेदत्वमुच्यते परन्तु धर्म्माधर्म्मयोः "स्वर्गकामो यजेत" "न कलञ्जम्भक्षये" दित्यादिविधिनिषेधबलकल्पनीयतया आवश्यकन्तत्र विधिनिषेधवाक्ययोः प्रामाण्यम्, तत्प्रामाण्यञ्च वक्तुर्यथार्थवाक्यार्थज्ञानलक्षणगुणपूर्वकमेव वक्तव्यम् । तार्किकैः स्वतः प्रामाण्यस्यानङ्गीकारात् । अतः प्रथमं वेदप्रामाण्यप्रयोजकगुणसाधनमुपक्रममाणः कणादाचार्य्यः प्राहस्म ष-

ष्ठाध्यायादावेव "बुद्धिपूर्वा वाक्यकृतिर्वेदे *" इति, अस्यायमर्थः वाक्यकृतिर्वाक्यरचना बुद्धिपूर्वा नाम वक्तृयथार्थवाक्यार्थज्ञानपूर्वा वाक्यरचनात्वात् काञ्च्यां त्रिभुवनतिलको भूपतिरित्यस्मदीयवाक्यरचनावत्। ततश्चेह वक्तृयथार्थवाक्यार्थज्ञानपूर्वकत्वरूपसाध्यसिद्धिःस्वान्यथानुपपत्त्या वक्तुर्यथार्थज्ञानमनुमापयति। नचास्मदादिज्ञानपूर्वकत्वेनाऽन्यथासिद्धिः शङ्क्या "स्वर्गकामो यजेत"इत्यादाविष्टसाधनतायाःकार्यतायाश्चाऽस्मदादिबुद्ध्यगोचरत्वेन स्वतन्त्रपुरुषपूर्वकत्वस्य सिद्धेः। सचायं स्वतन्त्रोवेदपुरुष इति संहितासु भ्रमप्रमादादिदोषशून्यस्वतन्त्रपुरुषप्रणीतत्वसिद्धिः॥

इदानीम्प्रकारान्तरेण वेदवाक्यानां बुद्धिपूर्वकत्वमाचष्टे। "ब्राह्मणे सञ्ज्ञाकर्म्म सिद्धिलिङ्गम्" ब्राह्मणे वेदभागे सञ्ज्ञाकर्म्म नामकरणं तद्वक्त्रादिकस्य बुद्धिमाक्षिपति यथा लोके चैत्रमैत्रादि नामकरणम् अस्ति च नामकरणंब्राह्मणे "उद्भिदा यजेत" "बलभिदा यजेत" "अभिजिता यजेत" "विश्वजिता यजेत" इति, अत्र हि उद्भिदादिनामानि स्वतन्त्रस्य कस्य चित् व्यवहर्तुर्बुद्धिमाक्षिपन्ति अलौकिकानामर्थानामस्मदादिबुद्ध्यगोचरतया ऽस्मदादिबाधादपरमनुमापयन्ति सचायमपरो ऽनुमित्सितो वेदपुरुषो भगवानीश्वर इति "बुद्धिपूर्वोददातिः †"इति तृतीयं काणादं सूत्रम्। अस्यार्थः। "स्वर्गकामो गां दद्या" दित्यादौ यद्दानप्रतिपादनं तदिदं बोधयितुर्दानधर्म्मिकेष्टसाधनताज्ञानजन्यम्। तच्चेदमिष्टसाधनताज्ञानं निष्कम्पप्रवृत्तिजनकं नाऽर्वाग्दृशामस्मदादीनामपरोक्षात्मकमिति, तादृशज्ञानाश्रयस्तत्रापि सिद्ध्यति "तथा प्रतिग्रहः"इति चतुर्थपारमर्षसूत्रस्याप्येवमेवार्थो ऽवगन्तव्यः। नचेह बुद्धिपूर्वा वाक्यकृतिर्वेदे इति प्रथमे वेदपदेन,द्वितीयसूत्रे च ब्राह्मणपदेन,निर्द्देशात्कथमनयोर्ब्राह्मणस्य वेदपदार्थसाधकत्वमिति शङ्क्यम्। अत्र हि षष्ठेऽध्या-

* वेदत्वं च शब्द तदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वेसति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्।

† धातुनिर्द्देशे श्तिवन्तोयम्।

ये संसारमूलकारणभूतौ धर्म्माधर्म्मौ परीक्षिष्यमाणौ तौ च वेदैकवेद्यौ वेदवाक्यानां च कणादमते आप्तोक्तत्वेन प्रामाण्यम्, आप्तश्च यथार्थप्रकृतवाक्यार्थज्ञानाश्रयो ऽतः प्रकृतवाक्यार्थविषयकयथार्थज्ञानात्मकं वेदप्रामाण्योपोद्वलकमेव प्रकृते सिषाधयिषितं, तच्च मन्त्रब्राह्मणात्मककृत्स्नवेदसाधारणमिति प्रथमसूत्रेण तत्साधयित्वा द्वितीयेन सूत्रेण सञ्ज्ञाबहुले ब्राह्मणभागे सञ्ज्ञाकर्म्मणाऽपि तत्साधितमिति वेदैकदेशे ब्राह्मणे सञ्ज्ञाकरणात्मकवेदप्रामाण्यप्रयोजकवक्तृयथार्थवाक्यार्थज्ञानात्मकगुणपूर्व्वकत्वप्रदिदर्शयिषया प्रवर्तमानेन सूत्रकृता स्फुटं ब्राह्मणे वेदत्वबोधनात् । नहि भारते पुरुषार्थचतुष्टयं न्यरूपीत्यभिधाय मोक्षधर्म्मे मोक्षो निरूपित इत्यभिधाने मोक्षधर्म्मो महाभारतप्रकरणतां जहातीति, वक्ता वा तस्य तदङ्गतां नाभिप्रैतीति कश्चिद्वक्तुमुद्यच्छेदपि प्रेक्षावान्, नह्यास्तिकैर्वेदमपहायाऽपरस्य दृष्टानुमितश्रुत्यमूलकशब्दस्य धर्म्माधर्म्मयोः प्रामाण्यमङ्गीक्रियते यस्य प्रामाण्यसाधनप्रत्याशया ब्राह्मणानां सञ्ज्ञाकरणात्मकलिङ्गेन वक्तृयथार्थवाक्यार्थज्ञानात्मकगुणसाधनायाऽयमुद्यमो महर्षेर्वक्तव्यः स्यात् । तस्मात् कात्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामस्वीकृतत्वादिति प्रलपन्सतां शोचनीयो राज्ञां दण्डनीयो लोकानां चोपहसनीय एव । किञ्च । "कात्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामनुक्तत्वा"दिति वदता ऽऽत्मौपम्येनाऽनभिज्ञत्वं प्रतारकत्वं चोत्प्रेक्ष्यते, तदिदमनृषेरवरस्य रौरवसाधनमृषौ । नह्यनृषिः कश्चित्पामरो ऽप्रदर्श्य दृढविपक्षसाधकं प्रमाणं यङ्कमप्येकमृषिं किम्पुनरेतावतो जैमिन्यादीन्महर्षीन्दूषयेत् । किञ्चाऽयं शक्तो "ब्राह्मणं न वेद"इत्येतादृशं प्रामाणिकस्य कस्यापि किं पुनर्ऋषेर्वाक्यं दर्शयेत्तदा ऽसौ क्षमेतापि "कात्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामनुक्तत्वा"दिति वक्तुम् । इत्यलमज्ञानपिशाचाविष्टस्य वाचानिग्रहेण ॥

"मनुष्यबुद्धिरचितत्वात्"इति कपटकाषायस्य चरमचेष्टितम्, अत्र ब्राह्मणानि न वेदा मनुष्यबुद्धिरचितत्वादिति न्यायः प्रयोक्तव्यः । सचाऽय-

मनाकलितन्यायप्रयोगस्य प्रयोगः । यदा हि मनुष्यबुद्धिरचितत्वं ब्राह्मणेषु सिद्धमभविष्यत्तदेदमिदमसाधयिष्यन्मनुष्यबुद्धिरचितत्वमेव तु स्वात्मनः प्रतिष्ठायै स्थानं लब्धुमपारयदग्निग्रियङ्कवन्मुखविवरमिति विदुषां विचारवर्त्मनि अस्यास्तोरमुष्य क्व नाम साधकत्वप्रत्याशा । किञ्च परमर्षिर्गौतमो वेदप्रामाण्यनिरूपणावसरे स्थूणानिखननन्यायेन वेदप्रामाण्यं द्रढयितुमिवाऽऽशशङ्के "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" तस्य वेदस्याऽप्रामाण्यम् अनृतव्याघातपुनरुक्तदोषेभ्यः। तत्रानृतं यथा "पुत्रकामः पुत्रेष्ट्या यजेत" अनुष्ठितायामपि चेष्टौ न युज्यन्ते पुरुषाः पुत्रैरिति दृष्टार्थस्यास्य वाक्यस्याऽप्रामाण्ये "ऽग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यदृष्टार्थकस्य वाक्यस्य प्रामाण्ये कथमाश्वासः। अत्र हि सूत्रस्थतत्पदेन परास्त्रष्टुमिष्टस्य वेदस्याऽप्रामाण्यमाशङ्कमानः "अग्निहोत्रंजुहुयात्स्वर्गकाम" इति ब्राह्मणस्याप्रामाण्यं दर्शयामास गोतमः यदि नाम ब्राह्मणं न वेदस्तर्हि वेदाप्रामाण्यसाधनावसरे ब्राह्मणस्याप्रामाण्यप्रदर्शनं कर्णस्पर्शे कटिचालनायितं स्यात्। नहि प्रेक्षावान् "मैत्रवाक्यं न विश्वसिही"ति कश्चन बोधयंश्चैत्रवाक्यस्य मिथ्यात्वं प्रसाधयेत् तदवश्यं ब्राह्मणं वेद इति परमर्षिरनुमन्यत इति । नच सूत्रस्थतत्पदेन परमर्षिर्नाभिप्रैति निर्देष्टुम् "अग्निहोत्रं जुहुयात्स्वर्गकाम" इति ब्राह्मणवाक्यम् । अपि तु यत्किञ्चिदन्यदेव संहितावाक्यमिति सर्वं सिकताकूपायितमिति वाच्यम्। व्याचचाणेन वात्स्यायनर्षिणा स्वभाष्येस्मदभिहितार्थस्य स्फुटमभिहितत्वात्। तथाहि "पुत्रकामेष्टिहवनाभ्यासेषु तस्येतिशब्दविशेषमेवाऽङ्गीकुरुते भगवानृषिः। शब्दस्य प्रमाणत्वं न सम्भवति कस्मादनृतदोषात् पुत्रकामेष्टौ पुत्रकामः पुत्रेष्ट्या यजेतेति नेष्टौ संस्थितायां पुत्रजन्म दृश्यते दृष्टार्थस्य वाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यम् "अग्निहोत्रं जुहुयात्स्वर्गकाम" इत्याद्यनृतमिति ज्ञायते विहितव्याघातपुनरुक्तदोषाच्च हवने "उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्य" मिति विधाय, विहितं व्याहन्ति "श्यावोस्याहुतिमभ्य-

वहरति य उदिते जुहोति श्यवलोऽस्याहुतिमभ्यवहरति योनुदिते जुहोति श्यावश्यवलौवास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति" व्याघाताच्चाऽन्यतरन्मिथ्येति † पुनरुक्तदोषाच्च अभ्यासे देश्यमाने "त्रिःप्रथमामन्वाह त्रिरुत्तमाम्" इति पुनरुक्तदोषो भवति, पुनरुक्तञ्च प्रमत्तवाक्यमिति तस्मादप्रमाणं शब्दो ऽनृतव्याघातपुनरुक्तदोषेभ्य " इति अत्र हि वात्स्यायनो दृष्टार्थवाक्यसाम्येनाऽदृष्टार्थे "अग्निहोत्रंजुहुयात्स्वर्गकाम" इति वाक्ये ऽनृतत्वमतिदिशति । इदं च ब्राह्मणवाक्यमिति पुष्कलं ब्राह्मणं वेद इति ॥ अथाद्यापि "अग्निहोत्रंजुहुयात्स्वर्गकाम" इति वाक्यस्य ब्राह्मणभावे न दृढिमानमवैषि इत्याग्रहस्ते तदा परित्यज ब्राह्मणेषु द्वेषमपवारयाऽसदावेशम् अववेहि च गोतमीयेद्वितीये ऽध्याये षष्टितमेन "वाक्यविभागस्य चार्थग्रहणात्" इत्युपक्रम्य "विध्यर्थवादानुवादवचनविनियोगात्" इत्येकषष्टितमेन ब्राह्मणवाक्यानि विभेजे भगवान्गोतमः अत्राहस्म वात्स्यायनः "त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनानि अर्थवादवचनान्यनुवादवचनानीति तत्र विधिर्नियामकः यद्वाक्यं विधायकं चोदकं स विधिः विधिस्तु नियोगो ऽनुज्ञा वा यथाऽग्निहोत्रं जुहुयात्स्वर्गकामइति"इति,ततश्च वात्स्यायनेन ब्राह्मणवाक्यविभागावसरे अग्निहोत्रं जुहुयात्स्वर्गकाम इत्येतस्य प्रदर्शनादिह वात्स्यायनव्याख्यानप्रणालिकया महर्षिर्गोतमो ऽग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिब्राह्मणं सूत्रस्यतत्पदेन सञ्जिघृक्षन् ब्राह्मणं वेदैकभागमभिमेने तदेवं सर्वर्षिसम्मते ब्राह्मणानां वेदभावे प्रवृत्ते चाऽऽजानिके तथैव व्यवहारे कृतमनल्पजल्पेन ॥

"यथा ब्राह्मणग्रन्थेषु मनुष्याणां नामलेखपूर्वका लौकिका इतिहासाः सन्ति नचैवं मन्त्रभागे" ॥

इति स एव प्रतारकः । अत्र किं ब्राह्मणग्रन्थेषु लौकिकेतिहासदर्शनं तेषां प्रतारकनिर्मितत्वावगमकमुताऽपौरुषेयत्वभङ्गप्रयोजकमा-

† भावाभावबोधकवाक्ययोरन्यतरस्य मिथ्यात्वमावश्यकमितिभावः ।

होस्विदादिमत्त्वप्रयोजकम् । नाद्यः लौकिकेतिहासदर्शनस्य ग्रन्थे प्रतारकनिर्मितत्वव्यभिचारित्वात् नहि लोके सर्वोपीतिहासः प्रतारकैर्व्यरचीत्यनुन्मत्त उत्प्रेक्षेतापि । न द्वितीयः यथाहि सृष्ट्युत्पत्त्यादिक्रमो वेदे ऽसकृदभिहितो वेदानां पौरुषेयत्वं नापादयति तथा लौकिकेतिहासोक्तिरपि, वेदानां सर्वविद्यास्थानतया लौकिकानां पुंसां सौकर्य्याय तत्र भगवता परमेश्वरेण याज्ञवल्क्योशनोङ्गिरःप्रभृतिनामोपन्यासपुरस्सरं ब्रह्मविद्यादिविद्यानामुपदेशात् यथा सृष्टेरनन्तरं न सृष्टिप्रतिपादको वेदो व्यरचि किन्तु सृष्टेरेवाऽनादिप्रवाहसिद्धानां वेदानां समनन्तरमिति सृष्टिं वर्णयतोपि वेदस्य न सृष्टिकालानन्तरकालोत्पत्तिकत्वं तथा ब्राह्मणेष्वितिहासवर्णनेपि नैतिहासिकार्थोत्पत्तिकालानन्तरकालोत्पत्तिकत्वमुपनिषदां ब्राह्मणानां च । न तृतीयः आदिमतामृषीणां नाममात्रदर्शनस्य ब्राह्मणेषु सादिमत्त्वशङ्काया अप्रयोजकत्वस्याऽसकृदाविदितत्वात् ॥

तथा ब्राह्मणग्रन्थानामेव पुराणेतिहासादिनामास्ति, न ब्रह्मवैवर्तश्रीमद्भागवतादीनां चेति निश्चीयते । किञ्च भोः ब्रह्मयज्ञविधाने यत्र क्वचिद्ब्राह्मणसूत्रग्रन्थेषु यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीरित्यादि वचनानि दृश्यन्ते एषां मूलमथर्ववेदेप्यस्ति । स बृहतीं दिशमनुव्यचलत् । तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् । इतिहासस्य च वै सपुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद ॥ १ ॥ अथर्व० कां० १५ प्रपा० ३० अनु० १ अतो ब्राह्मणग्रन्थेभ्यो भिन्ना भागवतादयो ग्रन्था इतिहासादिसञ्ज्ञया कुतो न गृह्यन्ते । मैवं वाचि । एतैः प्रमाणैर्ब्राह्मणग्रन्थानामेव ग्रहणं जायते न श्रीमद्भागवतादीनामिति कुतः ब्राह्मणग्रन्थेष्वितिहासादीनामन्तर्भावात् ॥

इत्यन्त ग्रन्थेन कपटकाषायो यत्प्राह, तदिदं तस्य शास्त्रानवबोधनिबन्धनविडम्बनामात्रम् । वात्स्यायनभाष्यस्य प्रामाण्यमङ्गीकुर्वाणो

ऽसौ कथं ब्राह्मणग्रन्थानामितिहासपुराणपदार्थतामभ्युपगच्छेत् । तत्र हि प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणानां प्रामाण्यमभ्यनुज्ञायते इति प्राहस्म वात्स्यायनः । यदि ब्राह्मणान्येवेतिहासाः पुराणं च तदा ब्राह्मणेन ब्राह्मणप्रामाण्यव्यवस्थापनमयुक्तं स्यात् । अपिच ब्राह्मणेष्वितिहासपुराणानामन्तर्भावे "एवमिमे सर्वे वेदा निर्मिता सकल्पा सरहस्या सब्राह्मणा सोपनिषत्का सेतिहासा सान्वाख्याता सपुराणा सस्वरा ससंस्कारा सनिरुक्ता सानुशासना सानुमार्जना सवाकोवाक्यास्तेषां यज्ञमभिपद्यमानानां छिद्यते नामधेयं यज्ञ इत्येवमाचक्षते " इति गोपथब्राह्मणपूर्वभागे द्वितीयप्रपाठकस्थं ब्राह्मणं स्फुटमप्रमाणं स्यादिति तद्ब्राह्मणातिरिक्तमितिहासं पुराणं च प्रमापयति एवञ्च "पुराणमितीतिहासस्य विशेष(१)णम्"इत्यप्यस्य कथनं प्रामादिकम् तथा सति पार्थक्येन "सेतिहासा सपुराणा" इति कथनासङ्गतेः । नहीतिहासपुराणयोरपार्थक्ये तथा कथनसम्भव इति विदुषामपरोक्षम् । किञ्च । पुराणमित्येतस्येतिहासविशेषणत्वे इतिहासः पुराणमिति लिङ्गव्यत्ययोपि न स्यात् । असति विशेषानुशासने तस्याऽन्याय्यत्वात् यत्तु ॥

तत्र देवासुराः संयत्ता आसन्नित्यादय इतिहासा ग्राह्याः । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । छान्दोग्योपनि० प्रपा० ६ आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चिन्मिषत् । इत्यैतरेयारण्यकोपनि० अ० १ खं० १ आपो ह वा इदमग्रे सलिलमेवास । श० कां० ११ अ० १ इदं वा अग्रे नैव किञ्चिदासीत् इत्यादीनि जगतः पूर्वावस्थाकथनपूर्वकाणि वचनानि ब्राह्मणान्तर्गतान्येव पुराणानि ग्राह्याणि ॥

(१) किञ्च शुक्लयजुर्वेदीयशतपथब्राह्मणे अश्वमेधप्रकरणे अष्टमेऽहनि इतिहासपाठः । नवमे च पुराणपाठस्तावदभिहितः सोप्यसौ न सङ्गच्छेत, यदीतिहासस्य पुराणमिति विशेषणंस्यात् । एतत्तत्वं च पुराणप्रामाण्यनिरूपणावसरे वक्ष्यते ।

इति प्राहानभिज्ञवञ्चकः, तदिदमस्याप्यत्यनिष्टसाधकं तथासति "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" ॥ १ ॥ ऋ० ७ अ० ७ व० ३ मं० ॥ २ ॥ अहं मनुरभवं सूर्य्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः । अहंकुत्समार्जुनेयंन्यृञ्जेऽहं कविरुशना पश्यतामा ॥ अ० १ अ० ३ अ०६ ब० १६ ॥ इत्यादि संहिताभागस्याप्यैतिहासिकार्थप्रतिपादकतया पुराणत्वापत्तेः । निरुक्तसंहितामन्त्रे सृष्टिपूर्वकालीनार्थप्रतिपादनेन निरुक्तभवदभिमतेतिहासपदार्थताया अवर्जनीयत्वात् । किञ्च यदसौ स्वचक्षुषी निमील्य जगदन्धं प्रपश्यति तदपि तस्य शशकस्वभावं*मनुहरति । यदसौ ब्रूते ॥

"यस्माद्ब्राह्मणानीति सञ्ज्ञी (१) पदमितिहासादिस्तेषां सञ्ज्ञेति तद्यथा ब्राह्मणान्येवेतिहासान् जानीयात् पुराणानि कल्पान्गाथा नाराशंसीश्चेति" ॥

तदिदमस्य हास्यास्पदमभिधानं विदुषां, किमप्येकं प्रमाणं प्रतिज्ञातार्थेऽनुपन्यस्य हठादेव ब्राह्मणान्येवेतिहासान् जानीयादिति वदन्कथं देवानांप्रियो हसनीयवचा न स्यात् । तथा पतञ्जलिः प्रथमाह्निके प्राहस्म "सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदा साङ्गा सरहस्या बहुधा भिन्ना एकशतमध्वर्य्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधावाह्वृचं नवधाऽथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषय" इति, अत्र पातञ्जले वाक्ये वैद्यकसाहचर्य्यादितिहासपुराणयोरपि स्मृतिरूपयोरेव ग्रहणस्य स्पष्टमवधार-

---

* शशकस्यायंस्वभावो यत्स्वमारणायान्तमश्वाद्यारूढं यं कमप्यवलोक्य तदग्रतो धावन्धावन्श्रान्तः पथ्यवस्थाय स्वनयने निमील्य जगदन्धं प्रपश्यति ।

(१) सञ्ज्ञि, इतिवक्तव्ये दीर्घीकरणमव्युत्पन्नतामेव द्रढ़यति ।

णादित्यलमनल्पजल्पनेन * यत्तु ।

अन्यदप्यत्र प्रमाणमस्ति न्यायदर्शनभाष्ये "वाक्यविभागस्य चार्थग्रहणात्" अ० २ आ० २ सू० ६० अस्योपरि वात्स्यायनभाष्यम् "प्रमाणं शब्दो यथा लोके विभागश्च ब्राह्मणवाक्यानां त्रिविधः अयमभिप्रायः ब्राह्मणग्रन्थशब्दा लौकिका एव न वैदिकाः ॥ इति

इदमस्याभिधानं दुष्कृतितामस्याऽवगमयति, तद्यथा "प्रमाणं शब्दो यथा लोके विभागश्च ब्राह्मणवाक्यानां त्रिविध" इति वात्स्यायनग्रन्थस्य यदसौ "अयमभिप्रायः ब्राह्मणग्रन्थशब्दा लौकिका एव न वैदिका" इत्यर्थमाचष्टे तदत्यन्तमसाधु, तादृशार्थस्य बुबोधयिषायां वात्स्यायनः "प्रमाणं शब्दो लोके विभागश्च ब्राह्मणवाक्यानां त्रिविध"इत्यकथयिष्यत, न तु "प्रमाणं शब्दो यथा लोके" इति सादृश्यार्थकयथापदघटितं, ब्रूते च तथेति लोके यथा शब्दः प्रमाणं तथा वेदेपीत्यध्याहार्य्यं वेदे ब्राह्मणरूपे ब्राह्मणसञ्ज्ञकानां वाक्यानां विभागस्त्रिविध इत्यर्थस्य तात्पर्यविषयत्वात् । सादृश्यस्य स्वनिरूपकप्रतियोग्यनुयोग्युभयसापेक्षतायाः सर्वानुभवसिद्धतया यथापदोपादानस्वारस्येनैव तादृशार्थस्य सुलभत्वात् अत एवाग्रे अत्रैव प्रकरणे "विधिविहितस्यानुवचनमनुवाद" इति चतुःषष्टितमे सूत्रे न्यायदर्शने अ० २ आ० १ "एवमन्यदप्युत्प्रेक्षणीय" मित्यन्तेन भाष्येण वैदिकवाक्यानि ब्राह्मणापरनामधेयान्युदाहरणभा-

* वात्स्यायनभाष्ये चतुर्थेऽध्याये प्रथमे आह्निके "समारोपणादात्मन्यप्रतिषेधः" ६२ । इति सूत्रे "प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते तेवा खल्वेतेऽथर्वाङ्गिरस एतदितिहासपुराणस्य प्रामाण्यमभ्यवदन् इतिहासपुराणं पञ्चमं वेदानां वेद" इत्यादिना सप्रपञ्चं स्वच्छं ब्राह्मणव्यतिरिक्ततया पुराणेतिहासयोः प्रामाण्यं व्यवस्थापितम् । अत्र बहु वक्तव्यमस्ति, परन्त्वसौ वादीकथाऽनर्हः । कथानियमाऽनभिज्ञत्वादल्पबुद्धित्वाच्च । इति कदाचित् द्विरुक्तादुरुक्तादिकमस्माकं सुधीभिः क्षन्तव्यम् ।

वेन प्रदर्श्य "लोकेऽपि च विधिरर्थवादो ऽनुवाद इति च त्रिविधं वाक्यम् । ओदनं पचेदिति विधिवाक्यम् । अर्थवादवाक्यमायुर्वर्चोबलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम् । अनुवादः पचतु पचतु भवानित्यभ्यासः क्षिप्रं पच्यतामिति वा अङ्ग पच्यतामित्यध्येषणार्थम् । पच्यतामेवेति वा ऽवधारणार्थम् । यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वमेवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितुमर्हतीति" वात्स्यायनेन इहैव प्रकरणे ऽस्मदुक्तार्थस्य वादिनो ऽत्यन्तप्रतिकूलस्य स्फुटमभिधानात् । तस्मात् द्वितीयाध्याये प्रथमाह्निके "वाक्यविभागस्य चार्थग्रहणा" दिति षष्टितमसूत्रमारभ्य चतुःषष्टितमसूत्रपर्य्यन्तमुपक्रमोपसंहाराभ्यासादिना ब्राह्मणानां वेदभावे सुव्यक्ते स्वीयदोषेण ब्राह्मणेषु शङ्कमानः कथन्न शङ्कनीयः । यत्तु "न चत्वार्य्येव प्रमाणानि किन्तर्हि ऐतिह्यमर्थापत्तिः सम्भवो ऽभाव इत्येतान्यपि प्रमाणानि इतिहोचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमैतिह्यम्" इति वात्स्यायनीयमुपन्यस्य ॥

"अनेन प्रमाणेनापीतिहासादिनामभिर्ब्राह्मणान्येव गृह्यन्ते नान्यत्" ॥

इत्यर्थकथनं तत्तु शुष्कमस्थि लिहानस्य स्वीयतालुविनिर्घर्षणजाऽसृक्पाननिरतस्य शुनोवृत्तमनुहरतीति न किञ्चिदिह वक्तुमुचितम् ॥

यदपि

अन्यच्च ब्राह्मणानि तु वेदव्याख्यानान्येव सन्ति नैव वेदाख्यानीति । कुतः "इषेत्वोर्ज्जेत्वेति" शतपथे काण्डे १ अध्या० ७ इत्यादीनि मन्त्रप्रतीकानि * धृत्वा ब्राह्मणेषु वेदानां व्याख्यानकरणात् ॥

इत्याह कश्चिदिन्द्रियारामः तदप्यनवबोधविजृम्भितम् अत्र हि ब्राह्मणानि न वेदाः वेदवाक्यधारणपूर्वकवेदव्याख्यानरूपत्वात् इत्यादिर्न्यायाकारः । अत्र हि स्मर्य्यमाणकर्तृकत्वं रागवत्पुरुषकर्तृकत्वं चोपाधिरित्येतदनुमानं पूर्वोक्तरीत्या ऽपाकरणीयमिति न किञ्चिदेतत् ।

* प्रतीकानितिवक्तव्ये नपुंसकोक्तिर्वक्तुर्वैदुष्यनापुंसक्यं सूचयति ।

किञ्च व्याख्यातव्यव्याख्यान†योर्नैकपदवाच्यत्वमिति व्याप्तिर्न सम्भवति "पश्चादिभिश्चाविशेषात्" इति भाष्यस्य स्वेनैव शङ्कराचार्येण भाष्यपदव्यपदेश्यविपुलव्याख्यानकरणात्। भाष्ये हि स्वपदानि सर्वत्र स्वपदैरेव व्याख्यायन्ते अत एव "अथ शब्दानुशासन" मिति पातञ्जलेपि, अथेत्ययं शब्दोऽधिकारार्थ इत्यादिव्याख्यानम्। नाप्यनेककर्तृकत्वं व्याख्यातव्यव्याख्यानयोरिति व्याप्तिर्येनेश्वरप्रणीतत्वाभाव आशङ्क्येत ब्राह्मणेषु, पूर्वोक्तस्थलयो* रेवानेककर्तृकत्वस्य व्याख्यानव्याख्येयभावव्यभिचारित्वदर्शनात् नच भाष्यादिग्रन्थे ग्रन्थान्तरस्थवृद्ध्यादिपदानां व्याख्यानंनाष्टाध्याय्यादिपदवाच्यमेवमिहापि संहितास्थपदव्याख्यानरूपैर्ब्राह्मणैर्नभवितव्यं संहितापदवाच्यैरिति मद्वदनिष्टमापद्येतेति शङ्क्यम्। ब्राह्मणेषु संहितापदव्यवहार्यत्वस्याऽस्माकमप्यनिष्टत्वात्। नच तावता वेदाम्नायपदव्यवहार्य्यत्वस्य व्याहतिप्रसङ्गः ब्राह्मणानि संहितापदाव्यवहार्य्याण्यपि वेदाम्नायपदव्यवहार्य्याणीत्यस्यैवास्माभिरप्यङ्गीकारात्। नच "इषेत्वोर्ज्जेत्वे" त्यादिप्रतीकमुपादाय ब्राह्मणेषु व्याख्यानदर्शनात् स्फुटन्तेषान्तदनन्तरकालिकत्वमिति कथं ब्राह्मणानां वेदभाव इति वाच्यम्। क्रमिकेषु संहितामन्त्रेष्वपि पूर्वोत्तरभावस्यावर्जनीयतया वेदत्वव्यवस्थितौ पूर्वोत्तरभावस्याकिञ्चित्करत्वात्। अथ यथा ब्राह्मणेषु संहितामन्त्रोल्लेखः, न तथा संहितास्विति संहितास्ववश्यं वैचित्र्यमङ्गी-

† प्रकृतेव्याख्यातव्यानां मन्त्राणां व्याख्यानभूतानां ब्राह्मणानां न वेदपदवाच्यत्वमित्येव ते तात्पर्य्यं भवेत् तत्तु युक्त्यानिराकृतं। शास्त्राणामपि चाऽत्रार्थे परंप्रातिकूल्यम्। यथाह मनुः षष्ठेऽध्याये श्लो० २९। एताश्चान्याश्च सेवेत दीक्षा विप्रो वनेवसन्। विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः"। अत्रोपनिषदां श्रुतिपदेनाऽभिधानादुपनिषदां च ब्राह्मणान्तर्गततया तदभिन्नाऽभिन्नस्य तदभिन्नत्वमितिन्यायेन भवितव्यं ब्राह्मणैरपि वेदैरेव।

* पतञ्जलिशङ्कराचार्य्याभ्यां निजपदानां स्वयमेवव्याख्यातत्वात्।

करणीयमिति माशङ्किष्ठाः। व्याख्यातव्यव्याख्यानरूपवैचित्र्यस्य संहितात्राह्मणयोर्मयाप्यङ्गीकरणीयत्वात्। नहि अष्टाध्यायीस्थपदव्याख्यानस्य महाभाष्ये दर्शनवदष्टाध्याय्यां महाभाष्यस्थपदादर्शनादष्टाध्यायी व्याकरणतां जह्यादिति शङ्कोदेति प्रेचावतः, ततश्च संहिताब्राह्मणयोः समाने ऽपि वेदभावे, संहितास्थपदानां ब्राह्मणेषु व्याख्यानेऽपि ब्राह्मणस्थपदानां संहितायां व्याख्याया अदर्शनं संहितानां वेदभावे यथोदासीनमेवं संहितास्थपदानां ब्राह्मणेषु व्याख्यानदर्शनमप्युदासीनमेवेति न व्याख्यातव्यव्याख्यानभावो वेदब्राह्मणयोरन्यतरस्याप्यवेदत्वमापादयतीति त्रैवर्णिकसर्वस्वे ऽस्मद्गुरवो निराकृतैकोत्तरशतावैदिकमताः सत्यसरस्वतीव्यपदेशयोग्याः श्री७ राममिश्रशास्त्रिणः॥ इतरया तु ब्राह्मणानां संहिताव्याख्यानरूपतया यथा तेषामवेदत्वं तया मयाऽपि संहितानां ब्राह्मणव्याख्यानरूपत्वव्यभिचारितया तासामेवावेदत्वं साधयिष्यते नहि व्याख्यानरूपत्वमेवावेदत्वसाधकं, नतु व्याख्यातव्यत्वमितिविनिगन्तुं शक्यम्। व्याख्यातव्यव्याख्यानभावस्य लौकिकग्रन्थसाधारणत्वात्। नच ब्राह्मणानि न वेदा वेदव्याख्यानत्वान्माधवीयर्ग्वेदव्याख्यानवदिति शङ्क्यम्। ब्राह्मणानि वेदा अपौरुषेयवाक्यत्वात् सहस्रशीर्षेतिवाक्यवदित्यादिहेतुशतद्वारा तस्य सत्प्रतिपक्षित्वात्। तस्मात्पूर्वोक्तरीत्या सर्वर्षिसंमते संहिताब्राह्मणयोर्वेदभावे ब्राह्मणानि न वेदा स्तद्व्याख्यानरूपत्वादिति पूतिकूष्माण्डायितं हेतुमुपन्यस्य विवदमानो विमतिः केनोपमेय इति न जानीमः॥ यत्तु

अन्यच्च महाभाष्ये केषां शब्दानां लौकिकानां वैदिकानां च तत्र लौकिकास्तावत् "गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण" इति, वैदिकाः खल्वपि "शन्नो देवीरभिष्टये। इषे त्वोर्ज्जे त्वा। अग्निमीळे पुरोहितम्। अग्न आयाहि वीतय" इति। यदि ब्राह्मणग्रन्थानामपि वेदसञ्ज्ञाभीष्टाभूत्तर्हि तेषामप्युदाहरणमदात्। अत एव महाभाष्यकारेण मन्त्रभागस्यैव वेदसञ्ज्ञां मत्वा प्रथममन्त्रप्रतीकानि वैदिकेषु शब्देषूदा-

हृतानि ॥

इत्याह मुण्डी, तत्तु तस्य व्यामोहमात्रम् । नहि भाष्यकारेण वैदिकोदाहरणतया ब्राह्मणवाक्यानि न धृतानीत्येतावता तेषामवेदत्वसिद्धिरितरथा संहितास्थानामपीतरेषामनिर्दिष्टवाक्यानां वेदत्वानुपपत्तेः । नच संहितास्वादिममन्त्रधारणात्तद्घटितानान्तासां साकल्येन वेदत्वसिद्धिर्ब्राह्मणेषु तु कस्यापि वाक्यस्याऽनुपन्यासात्क्वयमिव तेषां वेदत्वसिद्धिरिति शङ्क्यम् । सर्वस्यापि ब्राह्मणस्य तत्तत्संहितोत्तरभागात्मकतया संहितामन्त्रधारणेन विशिष्टायाः सब्राह्मणोपनिषत्कायाः संहितायाः प्रदर्शनस्य सिद्धत्वात् । नच तथा सति ब्राह्मणेषु संहितामन्त्रादिव्यवहार्य्यत्वप्रसङ्गः वेदपदव्यवहार्यत्वस्य तदुभयसाधारण्येपि प्रामाणिकानां संहितादिपदव्यवहार्यत्वस्य भागविशेषे एव प्रसिद्धेः । शक्तेः प्रामाणिकव्यवहारैकसमधिगम्यत्वात् नह्यष्टाध्यायी व्याकरणमिति स्त्रीप्रत्ययाः "तद्धिता" इति व्यपदिश्यन्त, तद्धिता वा "स्त्रीप्रत्यया" इति, यच्च स प्राह पुरुषपूरुषः

किन्तु यानि गौरश्व इत्यादीनि लौकिकोदाहरणानि दत्तानि तानि ब्राह्मणादिग्रन्थेष्वेव घटन्ते कुतः तेष्वीदृशशब्दपाठव्यवहारदर्शनात् ॥

इति, सोऽस्य महामोहः शुक्लयजुः संहितायां चतुर्विंशतितमे ऽध्याये "उक्ताः सञ्चरा एताः शुनासीरीयाः" इत्यादिसंहितास्वपि पशूनां पक्षिणाञ्च नामोत्कीर्तनस्याऽसकृद्दर्शनात् । तद्यथा सर्प, मृग, व्याघ्र, सिंह, मूषक, कश, नकुल, न्यङ्कु, पृषत, कुलुङ्गर्ष्य, रुरु, परस्वत, गौरमृग, महिष, गवयोष्ट्र, प्लुषि, भृङ्ग, मेष, मर्कट, मनुष्य, राजरोहिदृष्य, क्रमि, कीट, नीलङ्गु, मयूल, हलिक्ष्ण, वृष, दंश, रक्त, सर्पाज, शकुन्ति, सृगाल, पिद्व, ककट, चक्रवाक, सेधाव्रक, हस्ति, ककर, शिशुमार, मकर, मत्स्य, मण्डूक, भेकी, कुलीपय, नक्र, पृदाकुलज, प्लव, कूर्म, गोधा, कशर्च, मान्यालाजगर, शका,वार्ध्रीनस, समर, खड्ग, क्षणस्वा,

कर्णगर्द्दभ, तरक्षु, शूकर, कृकलासादीनाम्परःशतानाम्पशुजातीयानाम्, मशक, करण्डाटवीक, कपिञ्जल, कलविङ्क, तित्तिर, हंस, वलाका, क्रुंच, मद्गु, चक्रवाक, कुक्कुटोलूक, चाष, मयूर, कपोत, लावक, कौलीक, गोषादी, कुलाका, पारुष्ण, पारावत, सीचापू, जलहोराचदात्यूह, कालकण्ठ, सुपर्णवर्त्तिका, चित्रश्येन, वक, धुंक्षा, कलविङ्क, पुष्करसादी, वलाका, शार्ग, सृजय, शयाण्डक, शार्याती, वाहस, दार्विदा, दार्वाघाट, सुषिलीका, जहका, कोकिला, कुण्डृणाची, गोलत्तिका, पिप्यकादीनां परःशतानाम्पक्षिणाञ्च संहितास्वाम्नानात् । तदयम्प्रतारकः स्वतन्त्र इति ॥ यच्च

"द्वितीयाब्राह्मणे" १ अ० २ पा० ३ "चतुर्थ्यर्थे बहुलं छन्दसि" अ० २ पा० ३ "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" ३ अ० ४ पा० ३ इत्यष्टाध्यायीसूत्राणि । अत्रापि पाणिन्याचार्य्यैर्वेदब्राह्मणयोर्भेदेनैव प्रतिपादितम् *तद्यथा पुराणैः प्राचीनैर्ब्रह्माद्यृषिभिः प्रोक्ता ब्राह्मणकल्पग्रन्था वेदव्याख्यानाः सन्ति । अतएवैतेषां पुराणेतिहाससञ्ज्ञा कृतास्ति । यद्यत्र छन्दोब्राह्मणयोर्वेदसञ्ज्ञाभीष्टा भवेत्तर्हि चतुर्थ्यर्थे बहुलं छन्दसीति छन्दोग्रहणं व्यर्थं स्यात् । द्वितीयाब्राह्मणेति * ब्राह्मणग्रन्थस्य प्रकृतत्वात् अतो विज्ञायते न ब्राह्मणग्रन्थानां वेदसञ्ज्ञास्तीति ॥ इति,

तदिदमनाकलितव्याकरणतत्त्वस्य तस्यात्यन्तमतत्त्वार्थाभिधानम् । तथाहि । "द्वितीया ब्राह्मणे" । २ । ३ । ६ । ब्राह्मणविषये प्रयोगे व्यवहृपणिसमानार्थस्य दीव्यतेः कर्म्मणि द्वितीया विभक्तिर्भवति । "गामस्य तदहः सभायां दीव्येयुः" अत्र शतस्य दीव्यतीत्यादिवत् "दिवस्तदर्थस्य" २ । ३ । ५८ । इति सूत्रेण गोरस्येति षष्ठीप्राप्तौ गामस्येति द्वितीया विधीयते । अत्र ब्राह्मणरूपवेदैकदेश एव द्वितीयेष्टा, नतु मन्त्रब्राह्मणात्मके श्रुतिच्छन्दआम्नायनिगमवेदपदव्यपदेश्ये सर्वत्रेति शुक्तमुत्तरसूत्रे "चतुर्थ्यर्थे बहुलं छन्दसि" २ । ३ । ६२ । इति मन्त्रब्राह्मणरूपे छन्दो-

*"ब्राह्मणेति" इत्यपशब्दस्तु तस्यैव मुखे शोभताम् ॥*व्युत्पत्तिरेषाऽस्य

मात्रे विषये चतुर्थ्यर्थे षष्ठीविधानम्। "पुरुषमृगश्चन्द्रमसः" "पुरुषमृगश्चन्द्रमसी" अत्रहि छन्दसीत्यभिधानेनाचार्य्यः सञ्जिघृक्षति मन्त्रब्राह्मणरूपं सकलमेव वेदमिति तदभिप्रयन्नेवोदाजहार "याखर्वेण पिबति तस्यै खर्वो जायते। तिस्रो रात्रीरिति। तस्या इति प्राप्ते यां मलवद्वाससं सम्भवन्ति यस्ततो जायते सोभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यप्रगल्भो या स्नाति तस्या अप्सुमारुको याभ्यंक्ते तस्यै दुश्चर्म्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको जायते अहल्यायै जारमनाध्यै तन्तुः"इति बहुना ब्राह्मणं भाष्यकारः। इति फलवैशिष्ट्यसत्वेन ब्राह्मणस्य छन्दोरूपत्वे व्याकरणभाष्यकृतां सम्वादसद्भावाच्च प्रकृतसूत्रे छन्दोग्रहणवैयर्थ्यमभिदधानः कथं न "स्वछन्द" इति विज्ञैरभिज्ञेयः। अन्यथा तु "मन्त्रे श्वेतवहोक्थशस्पुरोडाशोण्विन्"। ३। २। ७१। "अवेयजः"। ३। २। ७२। "विजुपेच्छन्दसि"। ३। २ ७३। इत्येवं क्रमिकसूत्रपाठे चरमे छन्दसीत्युक्त्या मन्त्रभागेपि छन्दःपदव्यपदेश्यत्वं न सिद्ध्येत। यथाहि। "ब्राह्मणे" इत्यभिधाय "छन्दसी" त्यभिहितवतः पाणिनेर्ब्राह्मणं न छन्दःपदव्यपदेश्यत्वेनाभिमतमित्युत्प्रेक्षसे तथैवेहापि पूर्वसूत्रे "मन्त्रे" इत्यभिधाय "विजुपेच्छन्दसि" इति कथयतः पाणिनेर्मन्त्रोपि छन्दःपदव्यपदेश्यत्वेनाऽनभिमत इति वक्तव्यं स्यादिति मद्वदनिष्टं ब्राह्मणविद्विषस्तवापि। किञ्च। "अम्नरूधरवरित्युभयथा छन्दसि"। ८। २। ७। इतिपाणिनिश्छन्दःपदमुपादाय "भुवश्च महाव्याहृतेः"। ८। २। ७१। इति सूत्रेण वैकल्पिकं रुभावमनुशास्ति पुनरुत्तरसूत्रे, इति महाव्याहृतेरपि च्छन्दोभावच्युतिरावश्यकीस्यात्। नहि "ब्राह्मणे" इत्युपादाय "छन्दसी" त्युक्तिरेव ब्राह्मणानामच्छन्दोभावसाधिका, नतु "छन्दसी" त्यभिधाय व्याहृतेर्विशिष्य व्याहरणं व्याहृतेश्छन्दोभावप्रणाशकं नस्या-

दिति पाणिपिधानं तस्मादाचार्य्यः प्रयोगसाधुभावाप्रसङ्गातिप्रसङ्गनि-विवारयिषया क्वचित् सामान्यं "छन्दसी" त्युपादाय विशेषं "महा-व्याहृतेः" इति वक्ति। क्वचित्तु, विशेषं "ब्राह्मणे" "मन्त्रे" इति वोपादाय सामान्यं "छन्दसी" ति, तस्मात् ॥

यद्यत्र छन्दोब्राह्मणयोर्वेदसञ्ज्ञाऽभीष्टाभवेतर्हि चतुर्थ्यर्थेबहुलं छ-न्दसीति छन्दोग्रहणं व्यर्थ स्यात् कुतः। द्वितीया ब्राह्मणेति ब्राह्मण ग्र-न्थस्य प्रकृतत्वात्। अतो विज्ञायते " नब्राह्मणानां वेदसञ्ज्ञास्ति

इतिवदन्सतामसम्भाषणीयोऽयं कपटकाषाय इति पुष्कलम् ॥ अत्रापरे ब्राह्मणद्विषोऽस्पृश्यसंसर्गिणो ऽनधीतशास्त्रा ग्रहिला अनभिज्ञा विवद-न्ते। तथाहि। यदि ब्राह्मणानि छन्दांसि, तदा पाणिनिः कथं ब्रूते "छन्दो ब्राह्मणानि च तद्विषयाणि "। ४। २। ६६। यदि हि ब्रा-ह्मणानि छन्दांसि तदा पर्य्याप्तं छन्दांसीत्येव, यावता ब्राह्मणान्यपि छ-न्दांस्येवेति। सत्यम्। ब्राह्मणानां मन्त्रैः सह छन्दोभावस्य समानत्वे पृथग्ब्राह्मणग्रहणमपार्थकमिति प्राप्तं. तथापि ब्राह्मणग्रहणमिह "अ-धिकमधिकार्थम्" इति न्यायेन ब्राह्मणविशेषपरिग्रहार्थम्; तेनेह न याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि सौलभानि। व्याकर-णभाष्यकारोपि प्रकृतसूत्रे ब्राह्मणग्रहणप्रयोजनमिदमसूचयत् "याज्ञ-वल्क्यादिभ्यः प्रतिषेधो वक्तव्यः " इति वदन् ॥ अयमेवचार्थः " पुराण-प्रोक्तेषु ब्राह्मणकल्पेषु "। ४। ३। १०५। इति सूत्रे पुराणप्रोक्तत्वविशे-षणेन ब्राह्मणानि विशिंषतः पाणिनेरभिमतः। इतरथा ब्राह्मणविशे-षस्यापरिजिहीर्षितत्वे पुराणप्रोक्तेष्वित्याचार्यप्रवृत्तिरनर्थिका स्यादिति नापरोक्षं किमपि भाष्ये अमजुषां विदुषामिति बहुलेखादुदास्महे ꣸ ।

꣸ यद्यप्येतत्खण्डनानर्हं, व्याकरणे तदीयाबोधस्थानेकैरितरैरेव पूर्वं प्रदर्शनात्। तथाप्यनभिज्ञजनभ्रमनिराकरणाय किञ्चिदाम्रेडित-मिवाऽनुष्ठितं चन्तव्यं विज्ञैः।

*सुबोधव्याकरणे तूत्तरपञ्चके ऽमीपुनरर्याः स्वच्छमसकृदसूचिषतेतिशम ॥

यच्चाऽसौ ब्रूते धर्मध्वजी ।

अन्यच्च कात्यायनेनापि ब्रह्मणा वेदेन सहचरितत्वात् सहचारोपाधिं मत्वा ब्राह्मणानां वेदसञ्ज्ञा सम्मतेति विज्ञायते । एवमपि न सम्यगस्ति । कुतः । एवं तेनाऽनुक्तत्वादतोऽन्यैर्ऋषिभिरगृहीतत्वात् । अनेनापि न ब्राह्मणानां वेदसञ्ज्ञा भवितुमर्हतीति । इत्यादिबहुभिः प्रमाणैर्मन्त्राणामेव वेदसञ्ज्ञा न ब्राह्मणग्रन्थानामिति सिद्धम् ॥

इति, तदमुष्य गगननिष्ठीवनायितम् । केन वैदिकेनाभिहितं यत् कात्यायनोभिधत्ते "सहचारोपाधिना ब्राह्मणानां वेदसञ्ज्ञा सम्मता" इति, यच्चायमनालोचितशास्त्रो ऽकृतगुरुकुलवासो ब्रूते "अन्यैर्ऋषिभिरगृहीतत्वात्" इति, तदप्यस्य हास्यास्पदम् । ब्राह्मणानां वेदभावस्य पूर्वोक्तरीत्या सर्वर्षिसम्मतत्वात् । यच्चैष कपटकाषायो ब्रूते ।

किञ्च भोः । ब्राह्मणग्रन्थानामपि वेदवत्प्रामाण्यं कर्तव्यमाहोस्विन्नेति । अत्रब्रूमः । नैतेषां वेदवत्प्रामाण्यं कर्तुं योग्यमस्ति । कुतः । ईश्वरोक्ता‡ भावात् तदनुकूलतयैव प्रमाणार्हत्वाच्चेति । परन्तु सन्ति तानि परतः प्रमाणयोग्यान्येव ॥

इति, सोऽस्य सर्वशास्त्रविपरीतस्तावदुपसंहारः । ब्राह्मणप्रामाण्यस्य मन्त्राऽविशेषेणाऽसकृत्साधितत्वात् । अत एव पुराणप्रामाण्यव्यवस्थापनप्रसङ्गेन "प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणानां प्रामाण्यमभ्यनुज्ञायते" इत्याहस्म वात्स्यायनः । ब्राह्मणानां स्वतः प्रामाण्यविरहे कथमिव परकीयप्रामाण्यबोधकतासम्भवस्तेषाम् । नहि प्रमाणभूमिमनधि-

---

* इदं हि व्याकरणमाधुनिकानां छात्राणामुपकाराय तत्र भवद्भिः सुमहद्भिः श्री६ राममिश्रशास्त्रिभिर्निरमायि यस्य मुद्रणादिना प्रचारोऽचिरादेवाऽभ्यर्थ्यते शब्दतत्त्वमभिजिज्ञासमानैराधुनिकाल्पसारवैयाकरणजनाविलोक्तिभीरुभिर्जनैः ।

‡ इयमुक्तिरसुष्ठाऽसाधीयसः साधुत्वं दर्शयति ।

रोहन्ति ब्राह्मणान्यलब्धपदानि इतिहासपुराणीयप्रामाण्यव्यवस्थापना-
येशते । तस्माच्छ्रुतिवेदशब्दाम्नायनिगमपदानि मन्त्रभागमारभ्योपनि
षदन्तानां वेदानां बोधकानीति शास्त्रविदां परामर्शः । अत एव " श्रु
तिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः " इत्यास्तिकजनजीवातुर्भ-
गवान् मनुर्मेने । अत एव † तु वेदान्तचतुरध्याय्यां भगवान् व्यासो
ऽभिधित्सुरुपनिषदः समादत्तेऽसकृच्छ्रुतिपदशब्दपदानि " श्रुतेस्तु श-
ब्दमूलत्वात् " अ० २ पा० १ सू० २७ । " पदात्तु तच्छ्रुतेः " अ० २ पा० ३
सू० ४१ । " भेदश्रुतेः " अ० ३ पा० ४ सू० १८ । " सूचकश्च हि श्रु-
राचक्षते तद्विदः " । अ० ३ पा० २ सू० ४ । " तदभावो नाडीषु त
च्छ्रुतेः " अ० ३ पा० २ सू० ७ । " गुणसाधारण्यश्रुतेश्च " अ० ३ पा० ३
सू० ६४ । " वैद्युतेनैव ततस्तच्छ्रुतेः " अ० ४ पा० ३ सू० ६ । इत्यादि-
सूत्रेषु । अत एव च भगवान् कणादो दशाध्याय्या अन्ते " तद्वचनादा-
म्नायस्य प्रामाण्यम् " इत्युपसंजहाराम्नायपदेन वेदप्रामाण्यम् । अत्र हि
आम्नायपदं संहितामारभ्योपनिषदन्तनिखिलवेदबोधकम् । समानतन्त्रे
गोतमीये " मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् " इति सूत्रे त-
त्पदोपादेयसोपनिषत्कवाक्यकलापस्यैव प्रामाण्याऽवधारणात् । तत्रत्य-
तच्छब्दस्य मन्त्रब्राह्मणात्मकवेदबोधकता च प्रागवधारितैव । मन्वादि-
स्मृतयोऽप्यस्मिन्नर्थेऽनुकूलाः । तथाहि । षष्ठेऽध्याये मनुः " एताश्चा-
ऽन्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंसिद्धये
श्रुतीः २९ ॥ अत्र " औपनिषदीः श्रुतीः " इत्युक्त्या उपनिषदां श्रुतिश-
ब्दवाच्यत्वं , श्रुतिशब्दस्य च वेदाम्नायपदपर्य्यायत्वम् । यथाह मनुरेव
" श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः " । इति । ततश्च यद्यु-
पनिषदः श्रुतय इत्यभिमेने व्यवजहार च मनुस्तर्हि ब्राह्मणानां वेदभाव
आवश्यकः , यतो ब्राह्मणानामेव तु शेषभूता उपनिषदः । अत एव तु
ता वेदान्त इत्यभिधीयन्ते । अत एव "दशलक्षणकं धर्ममनुतिष्ठन् समा-

† सूत्रेषूपनिषद्वाक्यानां संजिघृक्षितत्वादेवेत्यर्थः ।

हितः । वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः" म० अ०६ श्लो०९४। इत्यादिमानवशास्त्रे वेदान्तपदेनोपनिषदां परिग्रहः । नचैकाम् ईशावास्योपनिषदमपहायाऽपराः सर्वा अप्युपनिषदो ब्राह्मणान्तर्गता आर्षो न वेदरूपाः । किन्तु ऋषिभिः प्रणायिषत । ईशावास्योपनिषत्तु शुक्लयजुःसंहितान्तर्गता तदीयाऽध्यायेषु चत्वारिंशत्तमस्वरूपेति तामेवैकां वेदरूपां मन्ये । तत्तात्पर्य्येणैव तु मनोरुपनिषत्सु श्रुतिवेदादिपदव्यवहार इति वाच्यम् । तथा सति "विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः" इति मानवे बहुवचनाऽसङ्गतेः । तदुपनिषच्छ्रुत्यन्तर्गतबहुत्वतात्पर्य्येण कथञ्चिद् बहुवचनसमर्थनसम्भवेपि "विविधा" इति तद्विशेषणं कथमपि नाऽनुकूलयितुमर्हति, तथा सति "अनेकाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः" इत्येवोक्तं स्यादिति । एतेन एकामीशावास्योपनिषदमपहायाऽपरा उपनिषदो न वैदिक्यः किन्तु आर्ष्य इति पृथग्जनस्याऽमुष्य कपटकाषायस्य वचः परं हसनीयमेव विदुषाम् । किञ्च । तथा सति व्याससूत्रेषु सर्वत्र विषयवाक्यभूता उपनिषद एवेति तत्तात्पर्य्येण व्यासस्य "श्रुतेः" "शब्दात्" इत्यसकृत्तथाऽभिधानमसङ्गतं स्यादिति पूर्वमवोचामैव "यथा ऋषीणां नामोल्लेखपूर्वका इतिहासा ब्राह्मणेषु वर्तन्तेनैवं संहितासु तस्माद्ब्राह्मणानि न वेदाः" इत्येतद्भ्रमनिराकरणं तु प्रकीर्णके प्रपञ्चयिष्यते इति सर्वं चतुरस्रमवदातं च ॥

व्यासोऽथ जैमिनिर्नाम कणादो गोतमस्तथा । वात्स्यायनस्तथापस्तम्बश्च कात्यायनो मुनिः ॥ पतञ्जलिः पाणिनिश्चेत्येवमाद्यामहर्षयः । प्राहुःस्म ब्राह्मणग्रन्थान्वेदं मत्वानिवस्फुटम् ॥

इत्यनभिज्ञजनमहामोहविद्रावणे श्रीमोहनलाल प्रणीते ब्राह्मणानां वेदत्वव्यवस्थापनं नाम प्रथमः प्रबोधः ॥ १ ॥

———

अत्र प्रबोधे यावन्तोऽर्था अभिहिताः तावतां विशेषं जिज्ञासमानैः पुरुषैस्त्रैवर्णिकसर्वस्वग्रन्थोऽवलोकनीयः । अत्र ग्रन्थे ब्राह्मणमञ्जूषा क्षत्रियमञ्जूषा वैश्यमञ्जूषा इत्येतानि प्रधानानि त्रीणि प्रकरणानि, प्रसङ्गतश्च वह्वीनां श्रुतीनामर्थाः प्रदर्शिताः यत्र प्रायो जनव्यामोहसम्भवः । रामतापनीगोपालतापनीनृसिंहतापन्याद्युपनिषदां च वेदत्वं व्यवस्थापितम् । प्रसङ्गतश्चर्षीणां भारद्वाजादीनां, शङ्कराचार्य्य रामानुजाचार्य्यप्रभृतीनामाचार्य्याणां च जननादिकालः प्रदर्शितः, पुराणपरिज्ञानार्थं तेषामध्यायसङ्ख्या आद्यन्तश्लोका विषयाश्चापि प्रदर्शिताः ।

# ओ३म्‌ः ।

यस्योच्छ्वासा भुजाश्चेमे चत्वारो भजतां नृणाम् ।
चतुर्वर्गप्रदास्तस्मै श्रीमते हरये नमः ॥ १ ॥

चातुर्वर्ण्यं चातुराश्रम्यमेवं शूद्रादीनां नाधिकारश्च वेदे ।
भद्रस्त्रीणां नास्तिधर्म्मः पुनर्भूभावस्तारादिप्रलापप्रभङ्गः ॥ २ ॥

अन्ये ये वा सन्ति धर्म्मा अनेके लोकाचाराः शास्त्रसिद्धान्तसिद्धाः ।
ते सर्वेऽस्मिन्नामतोऽथ प्रकीर्णे याथातथ्यात्संनिरूप्यन्त एते ॥ ३ ॥

तदेवं प्रकरणचतुष्केण तांस्तानसाधारणविषयान्प्रत्यपीपदं व्यवातिष्ठिपं च सर्वसाधारणं प्रसिद्धं वैदिकं पन्थानम् । अधुना तु वर्णविभागपुरस्सरतया तदीयवेदाध्ययनाऽनध्ययनविवेकपुरस्कारेण च संप्रदायविशेषपरिग्रहीतानाचारान् ऊर्द्धपुण्ड्रत्रिपुण्ड्रचन्दनभस्मादिधारणतुलसीनलिनाक्षभद्राक्षरुद्राक्षस्फटिकाक्षजीवकादिमालाधारणाद्येकादश्या--दिव्रतानुष्ठानरूपान् व्यवस्थापयतः प्रथमतो वर्णव्यवस्थाया आत्यन्तिकोपयोगित्वेन सैव निरूपणमर्हति । तत्र वर्णेषु प्रमाणम् ।

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रो ऽजायत" इति याजुषश्रुतिः

वर्णभेदेन च आचाराभिद्यन्ते । तद्यथाह मनुः अध्याये द्वितीये ॥

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥
गार्भैर्होमैर्जातकर्म चौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २७ ॥
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २८ ॥

प्राङ् नाभिवर्द्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ २९ ॥
नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥
मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३१ ॥
शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥ ३२ ॥

अत्र वैदिकैः पुण्यैः कर्मभिर्द्विजमात्रसंस्कारस्योक्तत्वेनापरेषां संस्काराः पुनर्न वैदिकैर्मन्त्रैरिति स्पष्टं तेषां वेदानधिकारित्वम् । यत्तु कश्चित्कलिकालवेनो वर्णसाङ्कर्यमिच्छन् ब्रूते

वेदादिशास्त्रपठने सर्वेषामधिकारोऽस्त्याहोस्विन्नेति । सर्वेषामस्ति वेदानामीश्वरोक्तत्वात्सर्वमनुष्योपकारार्थत्वात्सत्यविद्याप्रकाशकत्वाच्च । यद्यद्धि खलु परमेश्वररचितं वस्त्वस्ति तत्तत्सर्वं सर्वार्थमस्तीति विजानीमः । अत्र प्रमाणम् । यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याᳬ शूद्राय चार्य्याय च स्वाय चारणाय प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुपमादो नमतु ॥ १ ॥ य० अ० २६ ॥ मन्त्र २ ॥ ॥ भाष्यम् ॥

अस्याभिप्रायः । परमेश्वरः सर्वमनुष्यैर्वेदाः पठनीयाः पाठ्या इत्याज्ञां ददाति । तद्यथा । ( यथा ) येनप्रकारेण ( इमाम् ) प्रत्यक्षभूतामृग्वेदचतुष्टयीं ( कल्याणीं ) कल्याणसाधिकां ( वाचं ) वाणीं ( जनेभ्यः ) सर्वेभ्योमनुष्येभ्योऽर्थात् सकलजीवोपकाराय ( आवदानि ) आसमन्तादुपदिशानि तथैवसर्वैर्विद्वद्भिः सर्वमनुष्येभ्यो वेदचतुष्टयी वागुपदेष्टव्येति । अत्र कश्चिदेवं ब्रूयात् । जनेभ्यो द्विजेभ्य इत्यध्याहार्य्यं । वेदाध्ययनाध्यापने तेषामेवाधिकारत्वात्* । नैवं शङ्क्यम् । उत्तरमन्त्रभागार्थविरोधा-

*अधिकारादितिवक्तव्ये ऽधिकारत्वादिति मौर्ख्यं व्यनक्ति प्रतारकभिक्षोः

त्। तद्यथा। कस्य कस्य वेदाध्ययनश्रवणे ऽधिकारो ऽस्तीत्याकाङ्क्षाया-मिदमुच्यते। (ब्रह्मराजन्याभ्यां ब्राह्मणक्षत्रियाभ्याम्। [अर्य्याय] वैश्याय (शूद्राय) [चारणाय] अतिशूद्रायान्त्यजाय [स्वाय] स्वात्मीयाय पुत्राय भृत्याय च सर्वैः सैषा वेदचतुष्टयी श्राव्येति [प्रियो देवानां दक्षिणायै दातुरिह०] यथाहमीश्वरः पक्षपातं विहाय सर्वोपकारकरणेन सह वर्त्तमानः सन् देवानां विदुषां प्रियः दातुर्दक्षिणायै सर्वस्वदानाय प्रियश्च [भूयासं] स्याम्। तथैव भवद्भिः सर्वैर्विद्वद्भिरपि सर्वोपकारं सर्वप्रियाऽऽचरणं मत्वा सर्वेभ्यो वेदवाणी श्राव्येति। यथायं मे मम कामः समृध्यते। तथैवैवं कुर्वतां भवतां [अयं कामः समृध्यताम्] इयमिष्टसुखेच्छा समृध्यतां सम्यग्वर्धतां। यथादः सर्वमिष्टसुखं मामुपनमति। [उपमादो नमतु] भवतोपि सर्वमिष्टसुखमुपनमतु सम्यक् प्राप्नोत्विति। मया युष्मभ्यमयमाशीर्वादो दीयते इति निश्चेतव्यम्। यथा मया वेदविद्या सर्वार्था प्रकाशिता तथैव युष्माभिरपि सर्वार्थोपकर्त्तव्या नात्र वैषम्यं किञ्चित्कर्तव्यमिति। कुतः। यथा मम सर्वप्रियार्था पक्षपातरहिता च प्रवृत्तिरस्ति। तथैव युष्माभिराचरणे कृते मम प्रसन्नता भवति नान्यथेति अस्य मन्त्रस्यायमेवार्थोस्ति। कुतः। बृहस्पते अतियदर्य इत्युत्तरस्मिन्मन्त्रे हीश्वरार्थस्यैव प्रतिपादनात् वर्णाश्रमा अपि गुणकर्माचारतो हि भवन्ति। अत्राह मनुः। शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्। क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च॥ १॥ मनु० अध्या० १० श्लो० ६५ भाष्यम्॥ शूद्रः पूर्णविद्यासुशीलतादिब्राह्मणगुणयुक्तश्चेद् ब्राह्मणतामेति। ब्राह्मणभावं प्राप्नोति योस्ति ब्राह्मणस्याधिकारस्तं सर्वं प्राप्नोत्येव। एवमेव कुचर्य्याऽधर्म्माचरणनिर्बुद्धिमूर्खत्वपराधीनतापरसेवादि शूद्रगुणैर्युक्तो ब्राह्मणश्चेत् स शूद्रतामेति। शूद्राधिकारं प्राप्नोत्येव एवमेव क्षत्रियाज्जातं क्षत्रियादुत्पन्नं वैश्यादुत्पन्नं प्रति च योजनीयम्। अर्थाद्यस्य वर्णस्य गुणैर्युक्तो योवर्णः स तदधिकारं प्राप्नोत्येव। एवमेवापस्तम्बसूत्रेऽप्यस्ति॥

धर्म्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ १ अधर्म्मचर्य्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ २ प्रपाठक ॥ २ ॥ पटल० ॥ ५ ॥ सू० ॥ १० ॥ ११ ॥

भाष्यम् ॥ सत्यधर्म्माचरणेनैव शूद्रो वैश्यं क्षत्रियं ब्राह्मणं च वर्णमापद्यते समन्तात्प्राप्नोति सर्वाधिकारमित्यर्थः जातिपरिवृत्तावित्युक्ते जातेर्वर्णस्य परितः सर्वतो या वृत्तिराचरणं तत्सर्वं प्राप्नोति ॥ १ ॥ एवमेव स लक्षणेनाऽधर्म्माचरणेन पूर्वो वर्णो ब्राह्मणो जघन्यं स्वस्मादधः स्थितं क्षत्रियं वैश्यं शूद्रं च वर्णमापद्यते जातिपरिवृत्तौ चेति पूर्ववत् । अर्थाद् धर्म्माचरणमेवोत्तमवर्णाधिकारे कारणमस्ति । एवमेवाधर्म्माचरणं कनिष्ठ वर्णाधिकारेप्राप्तेश्चेति यत्र यत्र शूद्रो नाध्यापनीयो न श्रावणीयश्चेत्युक्तं तत्रायमभिप्रायः । शूद्रस्य प्रज्ञाविरहत्वात्* विद्यापठनधारणविचारासमर्थत्वात्तस्याध्यापनं श्रावणं व्यर्थमेवास्ति निष्फलत्वाच्च ॥

इति, कश्चित्स्वयंनष्टःपरान्नाशयतीत्याभाणकमनुसरन् प्रललाप; तदयुक्ततरम् । ययाहि निरुक्तयाजुषश्रुतिस्थशूद्रादिपदेन जातिशूद्रो गृह्यते कर्मशूद्रो वा नतावदाद्यः शूद्रजातिमपलपता कर्मैकनिबन्धना जातिमातिष्ठमानेन जातिशूद्रानभ्युपगमात् । नापि द्वितीयः । बाधितत्वात् । तथाहि । कुचर्य्याऽधर्म्माचरणनिर्बुद्धिमूर्खत्वपराधीनतापरसेवादिदोषदूषिता विद्याग्रहणधारणाऽसमर्थव्यक्तिं शूद्रपदेन व्यवहरता त्वया "शूद्रायावदानि" इत्यस्याध्ययनानर्हमध्यापयानीत्येवार्थो वक्तव्यः, सचात्यन्तमनन्वितः । नहि कश्चिदनुन्मत्तः [ ग्रहणधारणाऽसमर्थं जडमध्यापयेदित्युपदिशति । ततश्च श्रुतिस्थशूद्रपदस्य तादृशार्थकरणे पर्वतलङ्घनादिवाक्यानामिवाऽप्रामाण्यमेव स्यात् । न च "शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् । क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च" अ० १ श्लो० ६५ । इतिमनोः, धर्म्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते

*प्रज्ञाविरहित्वादिति वक्तव्ये "प्रज्ञाविरहत्वात्" इत्यभिधानं, स्वस्यै वप्रज्ञाविरहमभिव्यनक्ति

जातिपरिवृत्तौ। १। अधर्म्मचर्य्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ। २। प्रपाठक। २। पटल। ५। सू०। १०। ११। इत्यापस्तम्बस्य च वचो व्याकुलं स्याच्छूद्राज्जातं जातिशूद्रमभ्युपगच्छतस्ते। अत्र हि। वर्णविवेक आचार निबन्धनो नतु जन्मनिबन्धन इति स्पष्टमाभातीति शङ्करम्। अत्र वचनद्वयेप्यधर्म्माचरणेनोत्तमजातस्योत्तमत्वप्रच्युतिरधोजातस्य चोत्तमाचारेण सत्संव्यवहार्य्यत्वादरणीयत्वादिलक्षणोच्चत्वस्य च बोधनेन भवदभिमतार्थानभिधानात्। अत एव तु "शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्" इति, "योनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय" इति च ब्रुवाणो मनुर्धर्ममेवाऽतिदिष्टवान्, इतरथा ब्राह्मणः शूद्रः शद्रश्च ब्राह्मणो भवेदित्येवाकथयिष्यत्। अत एवाष्टमाध्याये "अत ऊर्द्ध्वं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयम्। २६६। शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्योप्यर्द्धशतं द्वे वा शूद्रस्तु बधमर्हति॥ २६७॥ पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने। वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः॥ २६८॥ समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे। वादेष्ववचनीयेषु तदेव द्विगुणं भवेत्॥ २६९॥ एकजातिर्द्विजातींश्च वाचा दारुणया क्षिपन्। जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥ २७०॥ नाम जातिग्रहं त्वेषामभिद्रोहेण कुर्वतः। निक्षेप्यो ऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः॥ २७१॥ धर्म्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः। तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥ २७२॥ श्रुतं देशं च जातिं च कर्म शारीरमेव च। वितथेन ब्रुवन्दार्प्यो दाप्यः स्याद्द्विशतं दमम्॥ २७३॥ काणं वाप्यथवा खञ्जमन्यं वापि तथा विधम्। तथ्येनापि ब्रुवन्दाप्यो दण्डकार्षापणावरम्॥ २७४" इति, अत्र हि मनुः शान्तिशीलाद्यभिव्यञ्जनिकां स्थिरां ब्राह्मणत्वादिजातिमभिप्रैतीति स्फुटमर्थविदाम्। अन्यथा वञ्चकभिक्षुरीत्या कुचर्य्याऽज्ञानपराधीनत्वमूर्खत्वादिगुणयुक्तस्य शूद्रपदार्थत्वे ऽज्ञानबहुलस्य पशुवदाचरतः "शतं ब्राह्मणमाक्रुश्य क्षत्रि-

यो दण्डमर्हति । वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ” इति केवलं वाचनिकापराधे बधावधि दण्डाभिधानं परमयुक्तं स्यात् नहि बालोन्मत्तप्रमत्तगृहाविष्टरोगग्रसितशक्तिकानामधिकोऽपराध, इति धर्म्मशास्त्रशैली । किञ्चाग्रे “ पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने । वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ” इति वर्णानामनुपूर्व्येण दण्डह्रासोऽप्यभिहितः, सोऽप्यसौ गुणमात्रकृतवर्णव्यवस्थामात्रत्राणस्य वर्णसाङ्कर्य्यमिच्छतो न सिद्ध्यति । किञ्च । “ एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् । जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥ नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः । निक्षेप्यो ऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥ ” अत्र पूर्ववचने एकजातिद्विजातित्वव्यवहारः, द्वितीये च द्विजातीनां तुच्छतासुसूचयिषया तदीयजातिनामग्रहणादिजन्यानादरे दीर्घदण्डाभिधानमत्यन्तमसङ्गतं स्यादित्यतिरोहितार्थमेव ‘ धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥ ” इति मानवं वचस्तु गुणमात्रनिबन्धनजात्यङ्गीकारपक्षे सुरगुरुणाप्यनुकूलयितुं न शक्यते । नह्यज्ञानतिरोहितचेतनाशक्तिको जडो ऽध्यापने शक्तः स्याद्, यदीयाध्यापननिषिषेधयिषया प्रवृत्तमिदं मानवं वच इति वक्तव्यं स्यात् । तस्मात् स्थिरैव जातिर्ब्राह्मणत्वादिलक्षणा मनोरभिमता । आचारास्तूत्कर्षापकर्षाधायका एव, चित्रस्थानीया भित्ताविति सिद्धान्तः । अत एव शतपथे “ स वै न सर्वेणेव संवदेत । देवान्वा एष उपावर्तते यो दीक्षते स देवानामेको भवति । न वै देवाः सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते हि यज्ञियास्तस्माद्यद्येनꣳ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिमम् ” इति श्रूयते अत्र शूद्रस्यायज्ञियत्वं वेदाध्ययनानधिकारनिबन्धनं स्पष्टमभिधीयते । नच शूद्राणां वेदाध्ययनानधिकारः संस्काराभावनिबन्धनः, संस्कारे तु कृते तेऽप्यधिकुर्य्युरध्ययने इति न किञ्चिदेतदिति वाच्यम् । शूद्राणां संस्कृतेरेवासम्भवात् । तथाहि । गर्भाधानात्पूर्वं शूद्रस्य पितरौ यदि केनचित्समस्का–

रिषातां तदा तौ संस्कृतौ स्वपुत्रसंस्करणे पर्याप्नुयाताम् । असंस्कृतौ तु, नाधिकुरुतः संस्कर्तुमिति युगसहस्रेणाप्यपर्याप्तौ ताविति । यदि च शूद्रपितराविव संस्करिष्येते इत्यस्ति तयोरधिकारः स्वपुत्रसंस्करणे, इति सम्भाव्यते । तदा पित्रोः पितरावप्यसंस्कृतौ कथं संस्कुर्यातामिति शूद्र-पितरावसंस्कृताविवेति तदवस्थैव शङ्का । नच सृष्टेरादावाद्यपितरौ स्वयमसंस्कृतौ कथं समस्कार्ष्टां स्वसन्ततीरिति शङ्क्यम् । भगवतैव तयोः संस्करणकरणात् । नच तावतापि संस्कारस्य संस्कृतपितृपूर्वकत्वव्याघातः शङ्कनीयः । नित्यशुद्धबुद्धमुक्तस्वभावस्य परमेशितुः स्वाभाविकसंस्कार-शालितया आस्तिकमात्रेणाङ्गीकारादिति सर्वमनवद्यम् किञ्च । शूद्राणां वेदाध्ययनानधिकारनिबन्धनो ब्रह्मविद्यास्वनधिकारो वेदान्तचतुरध्याय्यां व्यासदेवैरप्यभिहितः शूद्रजातिमनङ्गीकुर्वतो न सिध्यति । तथाहि । “ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ” अ॰ १ पा॰ ३ सू॰ ३५ । अस्यार्थः शूद्रपदेन प्रकरणे सम्बोधितोपि जानश्रुतिर्नाम राजा क्षत्रिय उत्तर प्रकरणे तस्योपनिषदि क्षत्रियत्वसिद्धेः सुस्पष्टत्वात् । “ संस्कारपरामर्शात्तदभावाभिलापाच्च ” अ॰ १ पा॰ ३ सू॰ ३६ । अस्यार्थः । इतोपि हेतोर्जातिशूद्रस्य ब्रह्मविद्यास्वनधिकारः, यतस्तत्रोपनयनादयः संस्काराः परामृश्यन्ते “ तं होपनिन्ये ” “ अधीहि भगव इति होपससाद ” इति शूद्रस्य चैकजातित्वेन “ तदभावाभिलापाच्च ” उपनयनादिवैदिकसंस्कारशून्यत्वस्याऽभिधानादित्यर्थः ॥ “ तदभावनिर्द्धारणे च प्रवृत्तेः ” अ॰ १ पा॰ ३ सू॰ ३७ । शूद्रत्वाभावनिर्णये एव तत्र वेदे आख्यायिकासु ऋषीणामुपनयनाख्यसंस्कारकर्मणि प्रवृत्तेरभिधानात् । “ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ” अ॰ १ पा॰ ३ सू॰ ३८ । अस्यार्थः । इतोपि हेतोः शूद्रो ऽनधिकृतो वेदे तस्याध्ययनश्रवणप्रतिषेधात् । श्रवणप्रतिषेधो यथा “ * पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम् ” यदि नाम श्रवणे वेदस्यानधिकृतः शूद्रस्तर्ह्यध्य-

* पादयुक्तं सञ्चारीत्यर्थः ॥

यनाधिकारस्तस्य दूरपराकृतः । सोयमर्थो वेदान्तमीमांसाश्रमजुषां विदुषां न तिरोहित इत्युपरम्यते ॥ षष्ठे ऽध्याये प्रथमपादे पूर्वमीमांसासु जैमिनिरपि बहुना युक्तिकलापेन शूद्रस्याध्ययनमाशङ्क्य प्रत्यवोचत् । तथाहि "चातुर्वर्ण्यमविशेषात्" २५ । अस्यार्थः । चत्वारोपि वर्णा अधिकुर्वते याज्ञिके कर्म्मणि । वेदे "यजेत" "जुहुयादि" त्यादाववि शि-ष्याधिकारश्रवणात् । "निर्द्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः" २६ । वाशब्दः पक्षं व्यावर्तयति त्रयाणामधिकारः स्यात् । कुतः । अग्न्याधेये निर्द्देशात् । अग्न्याधेये त्रयाणां निर्द्देशो भवति "वसन्ते ब्राह्मणोग्निमादधीत" "ग्रीष्मे राजन्यः" "शरदि वैश्यः" इति, शूद्रस्याधाने तु श्रुतिर्नास्तीत्यनग्निः शूद्रो भवेदनधिकार्य्यग्निहोत्रादिके कर्म्मणि । ब्राह्मणादीनेव त्रीनधिकृत्य सा श्रुतिः प्रवर्तते इत्यात्रेयो महर्षिर्मन्यतेस्म ॥ "निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात्" २७ । शूद्रस्यानधिकार इति न युक्तं, यतो ऽर्थि जातमधिकृत्य "यजेत" इति शृणुमः । सचासति प्रतिषेधवचने न शूद्रान्व्यावर्तयति ततश्च शूद्रा अप्यधिकुर्य्युरिति बादरेः पूर्वपक्षः ॥

"अपिवाऽन्यार्थदर्शनाद्यथाश्रुतिप्रतीयेत" २८ । उत्तरसूत्रम् । अपि वा शब्दः पूर्वपक्षनिराचिकीर्षया । ब्राह्मणादयो हि आधाने श्रूयन्ते ततश्च वसन्तादिकालश्रवणेन ब्राह्मणादित्रितयकर्तृकं वसन्तादित्रितयकालकर्म्माधानमित्यर्थलब्धिः । तथा च इदं शूद्रवर्जितानामेवानुक्रमणं भवति "वार्हन्निरं ब्राह्मणस्य ब्रह्मसाम कुर्य्यात्" "पार्थुरश्मं राजन्यस्य" "रायो वाजीयं वैश्यस्य" इति, शूद्रस्य तु साम न आमनन्ति । तथाऽन्यत्रापि "पयोव्रतं ब्राह्मणस्य" "यवागू राजन्यस्य" "आमिक्षा वैश्यस्य" इति । तथा ऽऽधाने "अष्टसु प्रक्रमेषु ब्राह्मणो ऽग्निमादधीत" "एकादशसु राजन्यः" "द्वादशसु वैश्यः" इति, "एवमब्रह्मसामकम् अव्रतकम्, अप्रक्रमं, च शूद्रस्य प्रयुक्तमपि कर्म निष्फलं स्यात् । तस्मान्न शूद्रो जुहुयात् यजेत वा" इति ॥

पुनः पूर्वपक्षयाञ्चकार "निर्देशात्तु पक्षे स्यात्" २९। नैतदेवं —शूद्रस्याग्न्यभावादनधिकारोग्निहोत्रादिषु—इति, सम्भवति हि शूद्रस्याधानम्, "य एवं विद्वानग्निमाधत्ते" इति शास्त्रं सामान्येन सर्वाधिकारं स्यादिति॥ "वैगुण्यान्नेति चेत्" ३०। यदुक्तम् "अब्रह्मसामकम्, अव्रतकम्, अप्रक्रमं, च शूद्रस्य कर्म प्रयुक्तमपि फलं न साधयेद्विगुणं यत इति, तत्परिहर्तव्यम्॥ "न काम्यत्वात्" ३१ नैष परिहारः काम्यत्वात्, कामयिष्यते शूद्रः। तथाहि। अभीवर्तं नाम ब्रह्मसाम, तद्धि अनारभ्य किञ्चिदाम्नातमविशेषेण "चतुर्विंमित आदध्यात्" इत्यनियतप्रक्रमेषु शूद्रस्य नियस्यते। "*मस्तु शूद्रस्य" इति सम्बन्धदर्शनादध्यवसीयते, मस्तु एव शूद्रस्य। तस्माच्चातुर्वर्ण्यमधिक्रियेत॥ "संस्कारे च तत्प्रधानत्वात्" ३२। अस्यार्थः। व्रताख्यः संस्कारः शूद्रस्य न श्रूयते, इति स व्यावर्तमानः शूद्रस्याधिकारं न व्यावर्तयति याज्ञिके कर्म्मणि। पुरुषप्रधानो हि संस्कारः। पुरुषं संस्करिष्यति। यस्य च यः संस्कारः कर्तव्यत्वेनाभिहितः स तस्यैवाऽऽवश्यको नान्यस्येति शूद्रस्य व्रताश्रवणान्नानधिकारसिद्धिस्तस्येति॥ "अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत" ३३॥ अपिवा शब्दः पूर्वपक्षनिराकरणार्थः। "वेदनिर्देशात्" वेदे हि त्रयाणां निर्देशो भवति "वसन्ते ब्राह्मणमुपनयीत" "ग्रीष्मे राजन्यम्" "वर्षासु वैश्यम्" इति, शूद्राधिकारसमर्पकवेदाभावादनधिकृतः शूद्रो यष्टुम्॥ "गुणार्थित्वान्नेति चेत्" ३४। गुणेनाऽध्ययनेनार्थः प्रयोजनं तच्चाध्ययनं शूद्रस्योपनयनविरहेपि' सम्भवति। नह्यनुपनीतो वेदाक्षरग्रहणाऽपटुरिति सम्भवः! ततश्च शूद्रः स्वयमध्येष्यते इति॥ संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः" ३५। अस्यार्थः। विद्यायामेवैषा–पुरुषश्रुतिः उपनयनस्य, संस्कारस्य तदर्थत्वात्–विद्यार्थमुपाध्यायस्य समीपमानीयते शिष्यो नाऽदृष्टार्थं नवाऽन्यदृष्टार्थम्। उपनयनं चाऽऽचार्यककरणप्रयुक्तम्, वेदाध्यापनेन ह्याचा–

*मण्डं दधिभवं मस्तु।

र्यो भवति । अध्यापनं चाऽध्येतारमपेक्षमाणं श्रुतिश्रुतं ब्राह्मणादित्रितयमेवाधिकारयिष्यति । नत्वेवं शूद्रम् इत्यसमर्थः । शूद्रो वेदग्रहणे' इति ॥

" विद्यानिर्देशान्नेति चेत् " ३६ ॥ गुरुकृतविद्यानिर्देशस्यावश्यकतया नाधिकारी शूद्र इति चेन्न " विद्यानिर्देशात् " स्वतोपि शूद्रस्य विद्याप्रयुक्तिसम्भवात् । नह्यध्यापिता एवाधीयते इति नियमः । स्वतोप्यध्ययन सम्भवादिति शूद्रोऽप्यधीयीतेति ॥

" अवैद्यत्वादभावः कर्म्मणि स्यात् " ३७ ॥ वेदाक्षरोच्चारणानुकूल ताल्वोष्ठपुटव्यापाररूपमध्ययनं शूद्रस्य स्वरूपतो नापलप्यते । यतः स्वतो यतमानोऽधिकुर्वीत । परन्त्वदृष्टविशेषसंस्कारविशेषोभयाक्षिताधिकारिता तत्रापेक्षिता सा च " पद्यु ह वा एतच्छ्मशानम् " इत्यादि श्रुत्या व्यावर्तते । तदिदमुक्तमाचार्य्येण " *अवैद्यत्वादभावः कर्म्मणि स्यात् " " तथाचाऽन्यार्थदर्शनम् " ३८ । शूद्रस्य सर्वथाऽनधिकारो वेदोच्चारणे " †पद्यु ह वा एतत् ×श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाऽध्येतव्यम् " इति हि पुनरामनन्ति, यस्य समीपे नाध्येतव्यं कथमधिकरोतु पुनरध्ययने ॥ पाणिनिरपि जातिशूद्रमभिमेने यतोऽसौ सूत्रयाञ्चकार " शूद्राणामनिरवसितानाम् " " प्रत्यभिवादे ऽशूद्रे " इति । वार्त्तिकमपि " शूद्रा चामहत्पूर्वा जातिः " अत्र हि कपटकाषायोक्तो जात्यमान्द्यादिगुणयोगी न शूद्रपदार्थः । तथासति तस्य गुणमात्रशब्दत्वेन जात्यवाचकतया " अमहत्पूर्वाजातिः " इति जातिग्रहणमपार्थकमित्यतिरोहितमेव, अत एव पतञ्जलिरपि " शूद्राणामनिरवसितानामिति सूत्रे " " यैर्भुक्ते पात्रं संस्कारेण शुद्ध्यति तेऽ निरवसिताः । यैर्भुक्ते पात्रं संस्कारेणापि न शुद्ध्यति ते ÷निरवसिताः " इति व्याचख्यौ । यदि

*अवैद्यत्वात् वेदाऽनधिकारित्वात् । †पद्भ्यां प्रचारी ।
×श्मशानसदृशो ऽपवित्र इत्यर्थः ।
÷निरवसिताः वहिष्कृताः ।

आध्यमान्यादिगुणयोग्येव शूद्रपदार्थतयाऽभिमतोभवेत्तदा तयाऽभिधानमसङ्गतम्, नहि स्वल्पप्रज्ञपुरुषोपभुक्तपात्रादावधिकज्ञस्य ब्राह्मणादेर्भुक्तिस्तस्याधमत्वमावहति जातिशूद्रमनङ्गीकुर्वतस्ते । जातिशूद्रमङ्गीकुर्वतामस्माकं तु वैध एव निरवसितत्वाऽनिरवसितत्वव्यवहारस्तेषु तेषु शूद्रविशेषेष्वित्यविकलं नः सर्वम् । अयञ्च सर्वोर्थः " तेन तुल्यं क्रिया चेद्वतिः " इति सूत्रं व्याचक्षाणेन महाभाष्यकारेणाऽनाविलमभिहितः । तथाहि । " सर्वे एते शब्दा गुण समुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । अतश्च गुणसमुदाये एवं ह्याह । तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः । तथा गौरः, शुच्याचारः, पिङ्गलः, कपिलकेश, इति । एतानप्यभ्यन्तरान्ब्राह्मण्ये गुणान्कुर्वन्तीति समुदायेषु च प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते । तद्यथा । पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तं, घृतं भुक्तं शुक्लो, नीलः, कृष्ण " इति । अपरत्रापिमहाभाष्यकारेणैव " अथवा सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते । ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम् । तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः । तथा गौरः, शुच्याचारः, पिङ्गलः, कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान्कुर्वन्ति । समुदाये च प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । तद्यथा । पूर्वे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो, नीलः, कपिलः, कृष्ण, इति । एवमयं समुदाये ब्राह्मण शब्दः प्रवृत्तो ऽवयवेष्वपि वर्तते जातिहीने गुणहीने च । गुणहीने तावद्, अब्राह्मणोयं यस्तिष्ठन्मूत्रयति । अब्राह्मणोयं यस्तिष्ठन्भक्षयति । जातिहीने सन्देहाद्दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । सन्देहात्तावद्, गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वा ऽध्यवस्यति ब्राह्मणोयमिति, ततःपश्चादुपलभते नायं ब्राह्मण इत्यब्राह्मणोयमिति । अस्मिन्नवकाशे ब्राह्मणोयमिति तत्र सन्देहाद्ब्राह्मणशब्दो वर्तते । जातिकृता चाऽर्थस्य निवृत्तिः दुरुपदेशाच्च । दुरुपदिष्टमस्य भवति । अस्मिन्नवकाशे ब्राह्मणस्तमानयेति स तत्र गत्वा

यं पश्यति तमध्यवस्यति ब्राह्मणोयमिति, ततश्च पश्चादुपलभते नायं ब्राह्मणः अब्राह्मणोयमिति निर्ज्ञातं तस्य भवति । तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते जातिकृता चार्थस्य निवृत्तिः । अतश्च सन्देहाद्दुरुपदेशाद्वा नह्ययं कालं माषराशिवर्णमापणे आसीनं दृष्ट्वा ऽध्यवस्यति ब्राह्मणोयमिति निर्ज्ञातं तस्य भवति " इति,

अत्र यदि भाष्यकारः शुच्याचारत्वगौराङ्गत्ववेदाध्ययनकर्तृत्वनिबन्धनां ब्राह्मणत्वादिजातिमभिप्रैष्यत् तदाकथमवदिष्यत् " जातिहीने सन्देहाद्दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते " इत्येवमादि वाक्यकलापम् ॥ तदयं निर्गलितोर्थः । जातितपःश्रुतानां सम्भूय त्रयाणां ब्राह्मण्यनिर्वाहकत्वमेष्वन्यतमेनापि विकलो न पर्याप्तब्राह्मणः । परन्तु ब्राह्मणब्रुवः पर्याप्तादरदानाद्यनर्हश्च ! शूद्रोपि शीलसन्तोषादिगुणवानादरणीयः । यथाह महाभारते कौशिकं प्रति धर्मव्याधः ।

" शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं लभते ब्रह्मन्क्षत्रियत्वं तथैव च ॥
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते । "

इत्येवमादि ॥ तत्रैव प्रकरणे धर्मव्याधं प्रति कौशिकः,

" ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतप्राज्ञः शूद्रेण सदृशो भवेत् ॥
यस्तु शूद्रो दमे सत्ये धर्मे च सततं स्थितः ।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ॥ "

भारते ऽरण्यपर्वण्यपि आजगरोपाख्याने नहुषप्रश्नोत्तरतया ।

" सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥ "

इति युधिष्ठिरः प्राहस्म । ततश्च निरुक्तलक्षणस्य शूद्रेष्वप्युपलम्भने तत्राऽतिप्रसङ्गमाशङ्कमाने नहुषे,

" शूद्रेषु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।

न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥"

इति वाक्येन निरुक्तगुणकृतब्राह्मणत्वलक्षणस्येष्टापत्त्याऽतिव्याप्तिं परिजहार । तस्माज्जातितपःश्रुतानां त्रयाणां सम्भूय ब्राह्मण्यनिर्वाहकमत्वमिति पुष्कलम् । नन्विदं विचार्यमाणं ब्राह्मणत्वं किं ब्राह्मणाद्ब्राह्मण्यां जायमानत्वमुत संस्कारविशेषशालित्वमथवा ब्राह्मणत्वजातिमत्त्वमाहोस्विच्छिष्टैः 'ब्राह्मण' इति व्यवह्रियमाणत्वम् । न तावदाद्यः । विश्वामित्रवीतिहोत्रादिष्वव्याप्तेः । तथाहि पौराणिकाः

"हरिणीगर्भसम्भूत ऋष्यशृङ्गो महामुनिः ।
श्वपाकीगर्भसम्भूतः पिता व्यासस्य सत्तमः ॥
गणिकागर्भ सम्भूतो विश्वामित्रो महामुनिः ।
शुकीगर्भसमुद्भूतः शुको नाम महामुनिः ॥" इति,

नैते ब्राह्मणाद्ब्राह्मण्यां समुदभूवन्तथापि ब्रह्मर्षय इति हि प्रसिद्धिस्तस्य विश्वामित्रादिष्वव्याप्तिरिति साधु समर्थितम् ॥ नद्वितीयः । गर्भाधानादिसंस्कारशून्यानामपि ब्राह्मणत्वावगतेः । तथाहि ।

"गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ।
द्विजोत्तमश्रियं प्राप्ताः सर्वलोकनमस्कृताः ॥
बहवः कथ्यमाना ये कतिचित् तान्निबोधत ।
जातो व्यासस्तु कैवर्त्याः श्वपाक्यास्तु पराशरः ॥
शुक्याः शुकः कणादाख्यस्तथोलूक्याः सुतोऽभवत् ।
मृगीजोऽथ ऋष्यशृङ्गो वसिष्ठो गणिकात्मजः ॥
मन्दपालो मुनिश्रेष्ठो लाविकाऽपत्यमुच्यते ।
माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसम्भवः ॥
बहवो ऽन्येपि विप्रत्वं प्राप्ता ये पूर्वमद्विजाः ।"

इत्यैतिहासिकोक्तिरसंस्कृतानां विप्रभावं समर्थयतीति संस्कारविशे-

षवत्त्वरूपलक्षणमव्याप्तम् । नापि तृतीयः । ब्राह्मणत्वजातेरेवाऽसिद्धेः । नहि घटत्वादिजातीनामिवाऽनुगतव्यवहारप्रसाधकतया ब्राह्मणत्वं प्रसेद्धुमर्हति । अयं ब्राह्मण इति लौकिकव्यवहारस्य सङ्केतविशेषेणैव निर्वहणसम्भवात् । नहि शूद्रादिव्यावृत्तं संस्थानविशेषमुपलभामहे ब्राह्मणे, येन ब्राह्मणो व्यावर्त्त्येताऽपरेभ्यो गौरिव गोत्वेनानुगतेन महिषादिभ्यः । अत एव मोक्षधर्मे भृगुभारद्वाजसंवादे ॥

" चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ॥ " इति,

अपरञ्च भारते—

" न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्म्मा रक्ताङ्गास्ते द्विजाः क्षत्रताङ्गताः ॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्म्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥
हिंसानृतप्रिया लुब्धाः सर्वकर्म्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रताङ्गताः ॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
शौचाचारस्थितः सम्यग् *विघसाशी गुरुप्रियः ॥
नित्यव्रती सत्यपरः सवै ब्राह्मण उच्यते ।
शूद्रे चैतद्भवेल्लक्ष्म द्विजे चैतन्न विद्यते ॥
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो नच ब्राह्मणः । " इति ।

तस्माद्ब्राह्मणत्वजातिमत्त्वं ब्राह्मणपदप्रवृत्तिनिमित्तमिति रिक्तं वचः ॥

*अतिथिभोजनाऽवशिष्टाशी ।

नान्तिमः । कृष्यार्यम्लेच्छानामनुगतशिष्टलक्षणाऽसम्भवेन शिष्टैः "ब्राह्मणः" इति व्यवह्रियमाणत्वं तत्त्वमित्यस्य सुदूरपराहतत्वादिति चेत् पूर्वोक्तरीत्या व्याकरणभाष्यकाराद्यभिमतं जातितपःश्रुतवत्त्वमेव ब्राह्मणत्वम् ॥ विश्वामित्रस्य त्वलौकिकतपोविशेषरूपोपायसमर्थितं ब्राह्मण्यं नास्मल्लक्षणक्षतिमावहति । अन्यथा, अनादौ संसारे कदाचित्केनचिद्योगिना लब्धसर्वर्द्धिना कर्णौ पिधाय चक्षुषी चोन्मील्य चक्षुषा साक्षात्कृते शब्दे श्रोत्रग्राह्यत्वरूपशब्दलक्षणविरहेण शब्दलक्षणयोगित्वं न स्यात् प्रत्युत शब्दरूपलक्षणयोगित्वमिति सर्वमलक्षणमेव स्यात् । किञ्च । श्रीरामाराधनार्थं प्रस्थितो भरतो मार्गे महर्षिणा भारद्वाजेन स्वीयाष्टसिद्धिमहिम्ना समासादितेन विविधभोज्यपेयचूष्यलेह्यादिना सन्तर्पितश्चेल्लौकिकतृप्तिसाधनानामहेतुभावो लौकिकतृप्तौ शक्यशङ्कस्तावता ॥ लौकिकाऽलौकिककार्य्यकारणभावाऽनङ्गीकारात् । तस्माद्विश्वामित्रे क्षत्रियागर्भसम्भूते अलौकिकोपायसाधितं ब्राह्मण्यं न क्षतिमावहतीति सुष्ठूक्तम् । वीतिहोत्रेणापि कस्यचिन्महर्षेराश्रमस्थेन ममाश्रमे ब्राह्मणातिरिक्तो न कश्चिदपीति वदतो, महर्षेर्वचनमाहात्म्येनानायासेनैव ब्राह्मण्यं लब्धमिति भारतविदां न विशेषकथनायाससाध्यमित्यलौकिकोपायसमर्थितं तद्ब्राह्मण्यं विश्वामित्रब्राह्मण्यसमानयोगक्षेममिति नाधिकं चोदमर्हति । श्वपाकीकैवर्त्युलूकीगर्भसम्भूतेषु पराशरव्यासकणादेष्वपरेषु च तथाविधेषु ब्राह्मण्यमेतन्न्यायेन समर्थनीयमिति न कश्चिदिहोपरोधः ॥ अस्मल्लक्षणकुक्षिनिक्षिप्ता जातिश्चेयं प्रात्यक्षिकी । ननु यद्येषा प्रात्यक्षिकी तर्हि चक्षुःसन्निकृष्टे ब्राह्मणे सन्निकृष्टघटत्ववत् तयापि जात्या प्रात्यक्षिक्या भवितव्यम् । नच मातापितृसम्बन्धानभिज्ञा यत्नवन्तोपि निपुणतरं परीक्षमाणाः क्षमन्ते समीक्षितुमिति कथमेषा तादृशी । शक्त्यभावात्तत्रानध्यक्षमिति तु न साम्प्रतम् । अगृहीतशक्तिकानामपि पुंसां प्रागप्यभिधायकव्यापारात् यथा सकलघटव्यक्त्यनुगतं घटत्वसामान्यं भवति सुग्रहमेवं शक्तिज्ञानविरहेवि ब्राह्मणोऽसाविति पदसम्बन्धानवगा-

हि प्रात्यक्षिकप्रत्ययो दुर्वार एव ब्राह्मणत्वजातेः प्रात्यक्षिकत्वं ब्रुवतः। यदप्युपनयनाध्ययनादि निमित्तं ब्राह्मणत्वग्रहे इति, तदप्यतिफल्गु। तस्य वर्णत्रयसाधारण्यात्। नाप्यध्यापनादि। तस्य कदाचिदपि क्षत्रियेणाप्यवलम्बनात्। दुष्टशूद्रेषु तु सर्वमेव ब्राह्मण्यग्राहकमिदं व्यभिचरति। इतिचेन्न। उत्पादकजातिज्ञानस्यैव ब्राह्मण्यपरिग्राहकत्वात्। यथा हि घटत्वादिग्रहे चक्षुरालोकसंयोगानेकव्यक्त्यनुगतव्यक्तिमहत्त्वसन्निकर्षाकारविशेषादयो निमित्तम् एवमिहोत्पादकजातिस्मरणमेव ब्राह्मण्यपरिग्राहकम् नह्येकमनुगतं जातिग्राहकमिति शक्यं वक्तुम्। अनुगतकारणानामेव जातिपरिग्राहकतायाः परैरप्यङ्गीकारात्। अत एव चतुर्थसूत्रे प्रथमाध्याये तन्त्रवार्त्तिककाराः "तस्माद्यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम्। तेनैव सति सम्बन्धे प्रत्यक्षं नान्यथाभवेत्॥" इति ततश्च नियतजातिपरिग्राहकानवस्थितौ ब्राह्मण्यपरिग्राहकमुत्पादकजातिज्ञानमिति सुष्ठु भणितम्॥ सचायमुत्पाद्योत्पादकभावोमातुरेव प्रत्यक्षविषयो ऽन्येषां तु पुनरनुमानाप्तोपदेशाद्यवगतो व्यवहारहेतुः। न चान्येषां मातृव्यतिरिक्तानामप्रत्यक्षोऽसावुत्पाद्योत्पादकभावः कथं निमित्तं प्रत्यक्षस्येति शङ्कियाः। नहि प्रत्यक्षमेव प्रत्यक्ष प्रयोजकमिति नियमः, अप्रत्यक्षस्यापीन्द्रियस्य चक्षुरादेः प्रत्यक्षप्रयोजकतायाः सर्वैरेव तान्त्रिकैरङ्गीकरणात्। नचोत्पादकजातिज्ञानं बिना अप्रत्यक्षा ब्राह्मणत्वजातिरुत्पादकजातिज्ञानेपि न प्रत्यक्षतो विषयीकर्तुं शक्येति शङ्कनीयम्। नहि मणि परीक्षाशास्त्रमनभिजानतां मणिवैजात्यं न प्रत्यक्षगोचरश्चेत्तदा सर्वेषामधिगतमणिशास्त्रतत्त्वानामपि तत्प्रत्यक्षगोचर इति वक्तव्यम् लोके यत्सहसा सर्वस्य प्रत्यक्षं न भवति, तन्निपुणतममवधारयतामपि न प्रत्यक्षगोचर इति परीक्षकाः क्षमाः कल्पयितुम् ततश्चेहोत्पादकजातिज्ञानमेवोत्पाद्यजातिप्रत्यक्षे कारणमिति सुष्ठु। स्त्र्यपराधात्तु कदाचिद्दुर्ज्ञानोप्यसौ सम्बन्धः। तावतापि जातेः प्रत्यक्षत्वे न क्षतिः। नहि भूमिष्ठानां यदप्रत्यक्षं गिरिशिखरमारुह्य तु प्रत्यक्षीकर्तुं शक्यं, तदप्र-

त्यचमिति युक्तम् । नच काचित्स्त्री दुश्चारिणीति सर्वास्ताहृश्य इति कल्पना युक्ता, महाकुलीना हि स्वीयप्राणार्पणपणेनापि स्वदारान्परिरक्षन्तीति प्रकटमेव सर्वस्य । किञ्च । व्यभिचारिणीनामपि भवति स्वभर्तृनिमित्तः प्रसव,इति गर्भो न दुष्टः व्यभिचारनिमित्तमशुभफलं तु मातुरेवाऽपत्यानि तु पुनर्ब्राह्मणप्रसूतानि ब्राह्मणजातीयान्येवेति स्थितम् ॥ ततश्च स्त्रीपुंसचक्रवाकयोः साम्येपि यथा विवेचकानां दूरतोपि विभागग्रहस्तथा शूद्रेणाकारसाम्येपि ब्राह्मणत्वजातेः पितृस्मृति सदैतिह्यादिज्ञानसहकारेण ब्राह्मणेषु प्रत्यक्षमविरुद्धम् ॥ येप्याचारमात्रनिबन्धनां जातिमातिष्ठन्ते तेषां प्रत्यक्षविरोधस्तावदपरिहार्य्यएव । सन्ति हि सहस्रं ब्राह्मणाः शूद्राचाराः शूद्राश्च द्विजाचारा इति । किञ्चैवमाचचाणो ऽन्योन्याश्रयादपि नापैति, आचारेण ब्राह्मणत्वं ब्राह्मणत्वेन च तस्य सन्ध्याद्यनुष्ठानाचारा इति । आचारमात्रनिमित्तकत्वे पुनरव्यस्थापि, स एव शुभमाचरन्ब्राह्मण इति, विपरीतमनुतिष्ठंस्तु अब्राह्मण इति वक्तव्यं स्यात् ॥ अत एव कांचन पूर्वसिद्धां ब्राह्मणत्वादिजातिमङ्गीकुर्वाणो भगवान् मनुः प्रथमाध्यायान्ते "निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्यैवात्राधिकारोस्मिन् ज्ञेयो नान्यस्य कस्यचित्" ॥ इति प्राह स्म अत्र हि "निषेकादिश्मशानान्तो मन्त्रैः संस्कारो यस्य जातः" इत्यनभिधाय "निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः" इति ब्रुवाणो मनुः संस्काराणां मन्त्रपूर्वकाणां पूर्वसिद्धजातिनिमित्तकतां स्वाभिमतप्रमाणतमवेदशब्दोदितां स्वच्छमाचष्टे, नतु जातेः संस्काराचारादिनिमित्तकतामिति सुधियः परीक्षन्तामपक्षपातशून्याः सन्तः ॥ अत एव गोपथब्राह्मणपूर्वभागे त्रयोविंशतितमं ब्राह्मणम् ॥

सान्तपना इदं हविरित्येष ह वै सान्तपनो ऽग्निर्यद्‌ ब्राह्मणो यस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनगोदानचूडाकरणोपनयनाप्लवनाग्निहोत्रव्रतचर्यादीनि कृतानि भवन्ति स सान्तपनो ऽथ योयमनग्निकः स कुम्भे लोष्टः । तद्यथा । कुम्भे लोष्टः प्र-

चिह्नो नैव शौचाचार्याय कल्पते, नैव शस्यं निर्वर्तयति, एवमेवायं ब्राह्मणोऽनग्निकस्तस्य ब्राह्मणस्यानग्निकस्य नैव दैवं दद्यान्न पित्र्यं नचास्य स्वाध्यायाशिषो न यज्ञ आशिषः स्वर्गङ्गमा भवन्ति" अत्र हि गर्भाधानादिसंस्कारविशिष्टस्याहिताग्नेर्ब्राह्मणस्य प्रशंसामभिदधती श्रुतिर्निंदन्ती च अनाहिताग्निं प्रतिषेधन्ती च तस्मै दैवे पैत्रे च कर्मणि दानमनुमन्यते, संस्कारकृतमग्न्याधानकृतं चातिशयं ब्राह्मणे बहुतरसमादरदानार्हतादिप्रयोजकम् । इति पूर्वसिद्धजातिपूर्वकता इहाप्यभिप्रेता । अत एवाऽनाहिताग्निं ब्राह्मणमुद्दिश्य "एवमेवायं ब्राह्मणो ऽनग्निकस्तस्य ब्राह्मणस्याऽनग्निकस्य नैव दैवं दद्यान्न पित्र्यम्" इत्यादि ब्रूते । इतरथा तु "एकान्ततः अब्राह्मण" इत्येवाभिदध्यात् । किञ्च । यद्यनग्निकस्य ब्राह्मण्यं सर्वथैवानभिमतं तदा "नचास्य स्वाध्यायाशिषो न यज्ञ आशिषः स्वर्गङ्गमा भवन्ति " इति निषेधोऽपार्थ एव स्यात् । तस्य वेदाचरग्रहणानधिकारित्वात् । यथा चाऽद्विजो नाधिकुरुते वेदग्रहणे, तथाऽवोचामैव । किञ्च । अमुमर्थमप्येष प्रतारकः प्रष्टव्यः । यो भवान् जातिशूद्रानप्यध्यापयितुमिच्छति वेदान् , तेनापि भवता न ते अनुपनीताः कथमप्यध्यापयितुमर्हाः, उपनयनस्याध्ययनाङ्गतायाः सर्वास्तिकतन्त्रसिद्धत्वात् । मनुनापि "नह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् । नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते । शूद्रेण हि समस्तावद्, यावद् वेदे न जायते । कृतोपनयनस्यास्य व्रतादेशनमिष्यते' इत्यादिना द्वितीयेऽध्याये अनुपनीतस्य द्विजस्यापि वेदाचरग्रहणानधिकारितायाः स्पष्टमुक्तत्वाच्च । ततश्च केन कल्पेन त्वमुपनेष्यसि तानिति वक्तव्यम् । सर्वाण्यपि गृह्याणि सूत्राणि तु एवम्भावापन्नानि "अष्टमे वर्षे ब्राह्मणमुपनयेत् १" गर्भाष्टमे वा २ एकादशे क्षत्रियम् ३ द्वादशे वैश्यम् ४ आषोडशाद्ब्राह्मणस्यानतीतः कालः ५ आद्वाविंशात् क्षत्रियस्य, आचतुर्विंशाद् वैश्यस्य, अत ऊर्द्ध्वं पतितसावित्रीका भवन्ति ६ नैनानुपनयेत् नाध्यापयेन्न याजयेत् नैभिर्व्यवहरेयुः ७ अलङ्कृतं कुमारं कुशलीकृतशिर-

## श्री ६ गुरु राममिश्रशास्त्री जी के बनाये वा शोधित टिप्पणी कृत पुस्तकों का सूचीपत्र।

शुद्धिसर्वस्व (जननादि अशौच का परमोत्तम निर्णय और समस्त ही वर्ण के दशाहाशौच के पक्ष का समूलोन्मूलन) ॥)

सभास्कर मन्त्रमीमांसा जिस में त्रैवर्णिकों को गायत्री मन्त्र नित्य है और स्त्री शूद्रादिकों को पौराणिक तांत्रिक मन्त्र इत्यादि बड़ी धूम धाम से संगीने के साथ लिखा है।

व्रात्यसंस्कारमीमांसा, (जिसमें कि ब्राह्मण क्षत्रिय वैश्य के व्रात्यता की शुद्धि का उपाय लिखा है और नागोजी भट्ट प्रभृति बड़े २ क्षत्रिय वैश्य के विद्विष्टाभिमानी वादिओं का समूल खण्डन किया है)।

उद्वाहसमयमीमांसा, (जिसमें कि बाल्यविवाह शास्त्र में कहीं नहीं लिखा है---इस बात का निरूपण है)।

सटीक श्रीभाष्य (श्री ६ रामानुजाचार्य्यप्रणीत श्री ६ पं० राममिश्र-शास्त्रिप्रणीतविषमपदटिप्पणीसहित) प्रति १०० पृष्ठ १)

शास्त्रदीपिका (पं० श्री ६ राममिश्र शास्त्रिप्रणीतटिप्पणीसहित) प्रति १०० पृष्ठ १)

राजराजेश्वरीस्तोत्ररत्नसमीक्षा।

## मेरे बनाये पुस्तकों की सूचना।

खाद्यखण्डन (गर्तप्रदर्शनीसम्वलितशाङ्करी टीका सहित) मूल्य प्रति १०० पृष्ठ १)

वेदान्तसिद्धान्तादर्श (आदर्शालोकसहित)।

दोषदूषकतामूलनिर्णय

स्वानुभवोद्रेक विनामूल्य

शिल्पचमत्कारचिन्तामणि

प्रथम भाग ।/)

द्वितीय भाग ।)

प्रतिबिम्बचित्रचिन्तामणि ।)